आ ये तस्थुः पृषतीषु श्रुतासु सुखेषु रुद्रा मरुतो रथेषु ।
वना चिदुग्रा जिहते नि वो भिया पृथिवी चिद् रेजते पर्वतश्चित् ॥ २ ॥

आ । ये । तस्थुः । पृषतीषु । श्रुतासु । सुऽखेषु । रुद्राः । मरुतः । रथेषु ।
वना । चित् । उग्राः । जिहते । नि । वः । भिया । पृथिवी । चित् । रेजते । पर्वतः । चित्

स्कन्द० ये किं कुर्वन्ति मरुतः । उच्यते । आ ये तस्थुः आतिष्ठन्ति । आरोहन्तीत्यर्थः । पृषतीषु पृषद्वर्णासु वडवासु श्रुतासु विख्यातासु, सुखेषु रुद्राः रुद्रपुत्राः मरुतः रथेषु । परोक्षकृतत्वादस्य अर्धर्चस्य यच्छब्दश्रुतेश्च तच्छब्दमध्याहृत्य पूर्वार्धर्चैकवाक्यता[1] योज्या । तेषां मरुतामिति परस्त्वर्धर्चः प्रत्यक्षः । ... ... ... ... ... ॥ २ ॥

वेङ्कट० आ तिष्ठन्ति[2] ये पृषद्वर्णासु विश्रुतासु सुखरेषु[3] च मरुतः रथेषु । वृक्षाः च वः भये हे उद्गूर्णाः! नि जिहते । पृथिवी अपि कम्पते, शिलोच्चयश्च ॥ २ ॥

मुद्गल० ये मरुतः रुद्राः रुद्रपुत्राः आ तस्थुः आतिष्ठन्ति पृषतीषु मरुतां वाहनेषु श्रुतासु ख्यातासु सुखेषु शोभनरथाक्षच्छिद्रेषु रथेषु रथान् आ तस्थुः आतिष्ठन्ति । हे उग्राः! मरुतः! यूयं यद रथम् आरूढाः स्थ तदानीम् वना चित् वनान्यपि नि जिहते न्यग्गच्छन्ति वः युष्माकम् भिया भीत्या । पृथिवी चित् पृथिव्यपि रेजते कम्पते । पर्वतः चित् पर्वतोऽपि रेजते उत्तरार्धः प्रत्यक्षकृतः । पूर्वार्धे च एवम् अकुर्वन् तेषां स्तोमम् ऋध्याम् इति पूर्वत्रान्वयः ॥ २ ॥

पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित् सानु रेजत स्वने वः ।
यत् क्रीळथ मरुत ऋष्टिमन्त आप इव सध्र्यञ्चो धवध्वे ॥ ३ ॥

पर्वतः । चित् । महि । वृद्धः । बिभाय । दिवः । चित् । सानु । रेजत । स्वने । वः ।
यत् । क्रीळथ । मरुतः । ऋष्टिऽमन्तः । आपःऽइव । सध्र्यञ्चः । धवध्वे ॥ ३ ॥

स्कन्द० ... ... ... ... ... ॥ ३ ॥

वेङ्कट० शिलोच्चयः च अत्यन्तम् वृद्धः बिभेति । तथा पर्वतस्य अन्तरिक्षात् सानु कम्पते भवतां शब्दे । यदा[4] यूयम् क्रीळथ मरुतः! ऋष्टिमन्तः, तदानीम् उदकानीव सहायन्तो गच्छथ ॥ ३ ॥

मुद्गल० हे मरुतः! वः युष्माकम् स्वने भयङ्करशब्दे सति पर्वतः चित् पर्वतोऽपि महि महान् वृद्धः सन्नपि बिभाय बिभेति । दिवश्चित् अन्तरिक्षस्यापि सानु समुच्छ्रितः प्रदेशः रेजते कम्पते । यत् यदा क्रीळथ क्रीडथ हे मरुतः! यूयम् ऋष्टिमन्तः आयुधवन्तः सम्भूय आपः इव सध्र्यञ्चः सहाञ्चनाः धवध्वे गच्छथ ॥ ३ ॥

---

१. पूर्वार्धैक° मूको. २. °न्ते वि°, [illegible]

वरा इवेद् रैवतासो हिरण्यैरभि स्वधाभिस्तन्वः पिपिश्रे ।
श्रिये श्रेयांसस्तवसो रथेषु सत्रा महांसि चक्रिरे तनूषु ॥ ४ ॥

वराःऽइव । इत् । रैवतासः । हिरण्यैः । अभि । स्वधाभिः । तन्वः । पिपिश्रे ।
श्रिये । श्रेयांसः । तवसः । रथेषु । सत्रा । महांसि । चक्रिरे । तनूषु ॥ ४ ॥

स्कन्द०　　　　॥ ४ ॥

वेङ्कट० कन्याया उद्वोढार इव रैवत पुत्राः, हिरण्मयैः आभरणैरुदकैश्च आत्मीयानि शरीराणि संश्लिष्टानि कुर्वन्ति । प्रशस्ता बलवन्तः रथेषु अयनाय वा स्यात् सत्यमेव महनीयान्याभरणानि अङ्गेषु कुर्वन्ति ॥ ४ ॥

मुद्गल० वराः इव विवाहयोग्याः[1] युवान इव इत् यथा रैवताः धनवन्तः हिरण्यैः हिरण्मयैः आभरणैः स्वधाभिः उदकैश्च तन्वः स्वकीयानि शरीराणि अभि पिपिश्रे सर्वतोऽलङ्कुर्वन्ति, तद्वत् एते मरुतोऽपि रैवतासः धनवन्तः हिरण्यैः हिरण्मयैः विद्युदाख्यैराभरणैः स्वधाभिश्च तन्वः स्वकीयानि शरीराणि अभि पिपिश्रे । श्रिये शोभनाय श्रेयांसः श्रेष्ठाः तवसः बलवन्तो मरुतः रथेषु सत्रा सत्यम् तनूषु महांसि तेजांसि चक्रिरे कृतवन्तः । इत् पूरणः ॥ ४ ॥

अज्येष्ठासो अकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय ।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥ ५ ॥

अज्येष्ठासः । अकनिष्ठासः । एते । सम् । भ्रातरः । ववृधुः । सौभगाय ।
युवा । पिता । सुऽअपाः । रुद्रः । एषाम् । सुऽदुघा । पृश्निः । सुऽदिना । मरुत्ऽभ्यः ॥ ५ ॥

स्कन्द०　　　　॥ ५ ॥

वेङ्कट० अमी सम् ववृधुः सुधनत्वाय । तेषाम् युवा सुकर्मा रुद्रः पिता, अथैषाम्[2] सुदोहा पृश्निः 'सुदिनम्' ( निघ ३,६ ) इति सुखनाम । सुखकरी माता भवति ॥ ५ ॥

मुद्गल० अज्येष्ठासः अकनिष्ठासः परस्परं ज्येष्ठकनिष्ठभावरहिताः सर्वेऽपि समानबलाः एते मरुतः भ्रातरः सन्तः सौभगाय सुभगत्वाय सम् ववृधुः वर्धन्ते । युवा नित्यतरुणः स्वपाः शोभनकर्मा एषाम् मरुताम् रुद्रः पिता, सुदुघा सुष्ठु दोग्ध्री पृश्निः गौर्देवता मातृभूता मरुद्भ्यः मरुदर्थम् सुदिना शोभनदिनानि, मङ्गलानीति शेषः ॥ ५ ॥

यदुत्तमे मरुतो मध्यमे वा यद् वावमे सुभगासो दिवि ष्ठ ।
अतो नो रुद्रा उत वा न्व१स्याग्ने वित्ताद्धविषो यद् यजाम ॥ ६ ॥

---

१ °कामया मूको　२ °याः मूको　३ तदैष्य वि°, तथा एवं

यत् । उत्ऽतमे । मरुतः । मध्यमे । वा । यत् । वा । अवमे सुऽभगासः । दिवि । स्थ
अतः । नः । रुद्राः । उत । वा । नु । अस्य । अग्ने । वित्तात् । हविषः । यत् । यजाम ॥ ६ ॥

स्कन्द० ... ... ... ... ... ॥ ६ ॥

वेङ्कट० त्रयो लोका भवन्ति । तेषु यत्रेदानीं वर्तध्वे[1] । ततः अस्माद् हे रुद्राः! आगत्य अस्य हविषः[2] क्षिप्रं जानीत । हे अग्ने! त्वं च वेत्थ हविर्यदा यजाम ॥ ६ ॥

मुद्गल० हे अग्ने! हे मरुतः! यूयम् यत् उत्तमे उत्कृष्टे दिवि द्युलोके मध्यमे वा दिवि यद् वा अवमे दिवि हे सुभगासः! स्थ भवथ । 'त्रयो वा इमे त्रिवृतो लोकास्तिस्रो दिवः पृथिवी' इति द्युलोकस्य त्रैविध्यम् । अतः अस्मात् स्थानत्रयात् नः अस्मदर्थं हे रुद्रा[3], आगच्छतेति' शेषः । उत वा अथवा नु अद्य यत् यजाम यद् हविः प्रक्षिपाम, हे अग्ने[4]! अस्य हविषः तद् हविः वित्तात् वेत्थ ॥ ६ ॥

अग्निश्च यन्मरुतो विश्ववेदसो दिवो वहध्व उत्तरादधि ष्णुभिः ।
ते मन्दसाना धुनयो रिशादसो वामं धत्त यजमानाय सुन्वते ॥ ७ ॥

अग्निः । च । यत् । मरुतः । विश्वऽवेदसः । दिवः । वहध्वे । उत्ऽतरात् । अधि । स्नुऽभिः ।
ते । मन्दसानाः । धुनयः । रिशादसः । वामम् । धत्त । यजमानाय । सुन्वते ॥ ७ ॥

स्कन्द० ... ... ... ... ... ॥ ७ ॥

वेङ्कट० अग्निः च यदा हे मरुतः! यूयं च विश्वधनाः दिवः आगच्छथ सम्[5] उच्छ्रितेभ्यः प्रदेशेभ्यः उच्छ्रितेषु वा देशेषु इति । शिष्टं[6] स्पष्टम् ॥ ७ ॥

मुद्गल० हे विश्ववेदसः! सर्वज्ञातारः! मरुतः! यत् यूयम् अग्निश्च दिवः द्युलोकाद् उत्तरात् उत्कृष्टतरात् अधि उपरि स्नुभिः सानुभिरुपरिप्रदेशैः वहध्वे वहथ, तत्र निवसथेत्यर्थः[1] । ते यूयम् मन्दसानाः मोदमाना अस्मदीयैः स्तोत्रैर्हविर्भिश्च धुनयः शत्रूणां कम्पयितारः रिशादसः अस्मद्धिंसकानामत्तारः[7] सन्तः वामम् वननीयं धनम् धत्त दत्त यजमानाय सुन्वते अभिषवं कुर्वते ॥ ७ ॥

अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।
पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥ ८ ॥

अग्ने । मरुत्ऽभिः । शुभयत्ऽभिः । ऋक्वऽभिः । सोमम् । पिब । मन्दसानः । गणश्रिऽभिः ।
पावकेभिः । विश्वम्ऽइन्वेभिः । आयुऽभिः । वैश्वानर प्रऽदिवा । केतुना । सऽजूः ॥ ८ ॥

स्कन्द० ... ... ... ... ... ॥ ८ ॥

---

१. वर्तध्वे ख. २. हविषा ख. ३. 'रुद्राणि' मूको. ४. नास्ति मूको. ५. सम् वि. ६. 'स्तोत्र' मूको. ७. 'नामाता' मूको

वेङ्कट० अग्ने! मरुद्भिः महान्ति शोभमानैः रसादरणपरैः[१] सह मोदमानः सोमम् पिब गणश्रिभिः[२] गणभावं ये श्रयन्ते तैः[३] शोधकैः विश्वस्य प्रीणयितृभिरायुभिः वैश्वानर! प्रत्नेन तेजसा संगतः ॥ ८ ॥

मुद्गल० हे अग्ने! मरुद्भिः सह मन्दसानः सन् सोमम् पिब । कीदृशैर्मरुद्भिः । शुभयद्भिः शोभमानैः शुभ्रभिः स्तुत्यैः गणश्रिभिः गणभावसाश्रयद्भिः पावकेभिः शोधकैः विश्वमिन्वेभिः विश्वं कृत्स्नं प्रीणयद्भिः आयुभिः आयुष्मद्भिः हे वैश्वानर! अग्ने! प्रदिवा पुराणेन केतुना ज्वालापुञ्जेन सजूः सहितः ॥ ८ ॥

इति चतुर्थाष्टके तृतीयाध्याये पञ्चविंशो वर्गः ॥

## [ ६१ ]

के ष्ठा नरः श्रेष्ठतमा य एकएक आयय । परमस्याः परावतः ॥ १ ॥

के । स्थ । नरः । श्रेष्ठऽतमाः । ये । एकःऽएकः । आऽयय । परमस्याः । पराऽवतः ॥ १ ॥

स्कन्द० अत्र श्यावाश्वाख्यानके[१] बृहद्देवतायां ( बृ. ५,५०-८१ ) च पठितमितिहासमाचक्षते[२] । श्यावाश्वस्य ब्रह्मचारिणः पिता आत्रेयोऽर्चनाना राज्ञो रथवीतेर्दार्भ्यस्य[३] ऋत्विग् बभूव । स कदाचिद् यज्ञार्थं वृतः सपुत्र उपागतः । वितते यज्ञे रथवीतेर्दुहितरं कन्यकां ददर्श[४], तां पुत्रार्थं ययाचे । तं रथवीतिर्भार्यया सह सम्मन्त्र्य प्रत्याचचक्षे—अनृषिर्नो न जामाता । अयं च श्यावाश्वो ब्रह्मचारी, न ऋषिः । इति स प्रत्याख्यातो वृत्ते यज्ञे स्वमाश्रमं जगाम । श्यावाश्वस्तु कन्याप्राप्त्यभिलाषः कदाचित् पाण्डुरो भैक्षं चचार । भैक्षं चरन् राजस्तरन्तस्य शशीयस्या भार्याया गृहं जगाम । तं शशीयसी भामगोत्रे दृष्ट्वा भर्त्रे तरन्ताय दर्शयामास । तेन चानुज्ञाता बहुविधं धनमजादिकं गवाश्वं[५] चास्मै ददौ । तरन्तोऽपि धनादिकं[६] दत्त्वा भ्रातुः पुरुमीळ्हस्य सकाशं प्रेषयामास—गच्छ सौम्य!, सोऽपि ते दास्यतीति । गच्छते चास्मै शशीयसी पन्थानं कथयाञ्चकार । अमुकेनामुकेन च पथा गच्छेति । एतस्मिन्नेव काले हि राजर्षि तरन्तं द्रष्टुं तत्र मरुत आजग्मुः । तांस्तुल्यरूपांस्तुल्यवयस्कांश्च दृष्ट्वा[७] विस्मितः श्यावाश्वः[८] पृच्छति स्म—"के ष्ठा नरः"[९] इति ।

के यूयम् स्थ हे नरः, मनुष्याकारा! श्रेष्ठतमाः[१०] अतिशयेन प्रशस्याश्च, आयय आयाताः स्थ एकएकः, पृथक् पृथगेकत्वेन अश्वेनेत्यर्थः । परमस्याः परावतः 'परावतः'[११] (निघ ३,२६) इति दूरनाम, परमं यद् दूरं तस्मात् । दूराद् कुतोऽपीत्यर्थः ॥ १ ॥

वेङ्कट० शौनकः—  राजर्षिरथ दार्भ्यो रथवीतिरिति श्रुतः ।
स यक्ष्यमाणो राजर्षिमभिगम्य[१२] प्रसाद्य च ॥
आत्मानं कर्मणर्थं च ख्यापयन् प्राञ्जलिः स्थितः ।
अवृणीतर्षिमार्चेयम् आर्त्विज्यायार्चनानसम् ॥

१. रसादर° वि°. २. नास्ति मूको. ३. °श्यावाश्वाख्यानम् कु. ४. °ददर्श मूको. ५. °गू वा वि°°. ६. दशशतानि मूको. ७. धनदत्त मूको. ८. श्यावाश्व मूको. ९-९. नास्ति मूको. १०. °मा ये मूको. ११. राजर्षिरभि° मूको.

स सपुत्रोऽभ्यगच्छत् तं राजानं यज्ञसिद्धये ।
यज्ञे च वितते ऽपश्यद् राजपुत्रीं[1] यशस्विनीम् ॥

स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ।
संयुज्यस्व मया राजन्निति वाक्यं [2]च सोऽब्रवीत्[2] ॥

प्रत्याचष्टे[3] स तं राजा सह सम्मन्त्र्य भार्यया ।
अनृषिर्नैव[4] जामाता कश्चिद् भवितुमर्हति ॥

प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्तत ।
श्यावाश्वस्य तु कन्याया मनो नैव न्यवर्तत ॥
[5]ततस्तौ तु निवर्तेतामुभावेवाभिजग्मतुः[5] ।
तरन्तपुरुमीळ्हौ तु राजानौ वैददश्व्यौ[6] ॥

ताभ्यां तौ चक्रतुः पूजाम् ऋषिभ्यां नृपती स्वयम् ।
ऋषिपुत्रं महिष्याश्च दर्शयामास तं नृपः ॥

तरन्तानुमता चैव प्रादाद् बहुविधं वसु ।
अजाविकं गवाश्वं च श्यावाश्वाय शशीयसी ॥

ददर्श संस्थितान् पार्श्वे तुल्यरूपान् स्वात्मनः ।
समानवयसश्चैव मरुतो रुक्मवक्षसः ॥

तांस्त्वत्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ।
श्यावाश्वो विस्मितोऽपश्यत् के ष्ठेति मरुतस्ततः ॥

ततस्तु मरुतो देवान् रुद्रसूनूनबुध्यत ।
'[7]य ईं वहन्त'[7] इत्याभिः बुद्ध्वा तुष्टाव तांस्तथा ॥

अतिक्रमं हि तं मेने ऋषिर्विपुलमात्मनः ।
यन्न दृष्ट्वैव तुष्टाव 'यज्ञ [8]के ष्ठ(ष्ठा' इ)ति[8]' पृष्टवान् ॥

स्तुताः [9]स्तुत्या तया[9] प्रीता गच्छन्तः पृश्निमातरः ।
अवमुच्य स्ववक्षोभ्यो रुक्मं तस्मै तदा ददुः ॥

---

१. राज्ञः च पुत्रीं वि॰. २-२. भवोऽब्र॰ ह लर्प. ३. प्रत्याचष्ट मूको. ४. अनृषिर्नोऽत्र मूको. ५-५. वनिम्यानुबवेनैव अभिजग्मतुरन्त्यः वि॰; ततस्तौ वनिम्यातु भावेनैवाभिजग्मतु' ह लर्प. ६. वैददश्वौ मूको. ७. ऋ ५,६१,११ ८-८. यद् के ईति मूको. ९-९. 'स्वात्मना मूको.

अत्राश्चर्यं पुरावृत्तमाहुरागमपारगाः।
अर्चनानाः पुराऽऽत्रेयो दार्भ्येण रथवीतिना॥

आर्त्विज्याय वृतो यज्ञे वितते हौत्र आस्थितः।
रथवीतिसुतां कन्यां ददर्श पितुरन्तिके॥

ययाचे स्वकुमाराय श्यावाश्वाय च तां नृपम्।
स प्रदानमना भार्यामपृच्छत् किं प्रयच्छसि॥

इति पृष्टा पुनः प्राह कथमस्मै प्रदास्यसि।
इतः पूर्वं सुता दत्ता नासीदनृषये क्वचित्॥

तथैवेति निश्चित्य प्रत्याचष्टार्चनानसम्।
श्यावाश्वः संस्थिते यज्ञे तेन राज्ञा निराकृतः॥

तामप्राप्याशान्वितो विप्रस्तपस्तेपे सुदारुणम्।
ब्रह्मचर्यरतः शान्तो भिक्षार्थं पर्यटन् [1]द्विजः॥

तरन्तमहिषीं साध्वीं विभिक्षेऽसौ शशीयसीम्।
सैनाप्यान्तिकं पत्युः प्रोवाचागतवानृषिः॥

इत्युक्तो नृपतिर्भार्यां प्रत्याहैनं प्रपूजय।
साऽनुज्ञाता गवां यूथं प्रादादाभरणानि च॥

तरन्तोऽपि पुनस्तस्मै प्रादाद्धनमपेक्षितम्।
दत्त्वा च पुरुमीळ्हस्य स्वानुजस्यान्तिकं प्रति॥

प्रेषयामास तमृषिं सोऽपि त्वो मानयिष्यति।
तथेति राज्ञो वचनं निशम्य तद्भार्यया शंसितसर्वभावः॥

गच्छन् शनैरध्वपथे मरुद्गणान् समानरूपान् स्वदिदृक्षयाऽऽगतान्।
विलोक्य विप्रः सभयः प्रणम्य कृताञ्जलिः कम्पितगात्रपादः॥

तुष्टाव शिष्टान् मरुतो विशिष्टैर्वचोभिः परितुष्टचित्ताः।
सम्प्राप्य सर्वं स्वमभीप्सितं सदा मरुद्भ्यो मुदितात्मविप्रः॥

---

1. °दाषद मूको.

जघने चोद एषां वि सक्थानि नरो यमुः । पुत्रकृथे न जनयः ॥ ३ ॥

जघने । चोदः । एषाम् । वि । सक्थानि । नरः । यमुः । पुत्रऽकृथे । न । जनयः ॥ ३ ॥

स्कन्द० किञ्च[1] जघने चोदः चोद्यतेऽनेनाश्व इति चोदः, कशा तोत्रं वा[2] । स जघन एषाम् अश्वानाम् । अश्ववारा[3] ह्यश्वादवतरन्तोऽप्रणाशार्थं चोदं कशां तोत्रं वा लम्बयन्ति । तेन सोऽश्वानां जघने भवति । तं दृष्ट्वैवमाह—जघने चोद एषाम् इति । किञ्च सक्थानि स्वानि सक्थानि नरः मनुष्याकाराः वि यमुः वियच्छन्ति । विकटावूरू[4] कुर्वन्ति इत्यर्थः । अश्वादवतीर्णमात्र-स्याश्ववारस्य विकटावूरू[5] भवतः । पुत्रकृथे न जनयः । पुत्रः क्रियते येन स पुत्रकृथः सुरतव्यापारः । जनयो जायाः । यथा सुरतव्यापारे जाया विकटावूरू[5] कुर्वन्ति तद्वत् । सर्वं चेदमचिरागतत्वस्य प्रतिजिगमिषुत्वस्य च प्रतिपादनार्थम् । एते अश्वास्तथा पर्याणिता एव अवतीर्णमात्रत्वाद्विकटा-वूरू कुर्वन्ति । अत एते अचिरागताः प्रतिजिगमिषवश्च लक्ष्यन्ते इत्यर्थः । यतश्चैवमत एतान् ब्रवीमि ॥ ३ ॥

वेङ्कट० जघने अश्वाजनिः एषाम् अवलम्बते । सक्थानि वि यच्छन्ति, यथा पुत्रकरणाय जायाः सक्थिनी वियच्छन्ति ॥ ३ ॥

मुद्गल० एषाम् अश्वानाम् जघने हन्तव्यप्रदेशे चोदः प्रेरिका कशा वर्तते[6], तथा सक्थानि ऊरु-देशान् नरः नेतारो मरुतः वि विशिष्य यमुः नियच्छन्ति । पुत्रकृथे पुत्रकरणे उत्पादने जनयः न अपत्योत्पादयित्र्यो योषित इव । ता यथा पुत्रोत्पादनकामाः[7] सङ्गमसमये ऊरू निवृतौ[8] कुर्वन्ति तद्वदित्यर्थः ॥ ३ ॥

परा वीरास एतन मर्यासो भद्रजानयः । अग्नितपो यथासथ ॥ ४ ॥

परा । वीरासः । इतन । मर्यासः । भद्रऽजानयः । अग्निऽतपः । यथा । असथ ॥ ४ ॥

स्कन्द० दृष्ट्वा तान् प्रेरयामास 'परा वीरास' इत्यृचा ।
कौचित्तु सह जायाभिः स्वानि गेहानि गच्छत ॥ इति ।

परा इतन परागच्छत । स्वानि गेहानीत्यर्थः । हे वीरासः । विक्रान्ताः । मर्यासः । मनुष्याकाराः । भद्रजानयः । भद्रास्तरुण्यो रूपवत्यश्च जाया येषां ते भद्रजानयः । एते हि तरुणा रूपवन्तश्च अत एषां भार्याभिरपि तरुणीभिरेव रूपवतीभिरेव च[9] भवितव्यम् । एवमवधार्यैषां भद्रजानित्व-मिदमाह—हे भद्रजानय इति । अग्नितपो यथा असथ अग्निना ये तप्यन्ते दह्यन्ते ते अग्नितपः ते यथा तद्वत् शीघ्रम् असथ भवथ । यथा अग्निना दह्यमानास्ततः प्रदेशाच्छीघ्रं गच्छन्ति, एवं शीघ्रं प्रतिगच्छत । गत्वा च भद्राभिस्सह क्रीडतेत्यर्थः ॥ ४ ॥

वेङ्कट० परा गच्छत हे वीराः! स्वगृहं प्रति मर्त्याः! भद्रा जाया[1] येषां ते भद्रजानयः! । आभरणैः अलंकृता यूयम् यथा भवथ तथा अग्नितप्ता इव वर्णतः ॥ ४ ॥

---

१. नास्ति कु. २-२. तोत्रं वा मूको. ३. अश्ववारा मूको. ४. विकटापुरू मूको. ५-५. विकटाः इव मूको. ६. नास्ति मूको. ७. 'कामे मूको. ८. विवृतौ मूको. ९. नास्ति वि[1].

मुद्गल० हे वीरासः ! वीराः ! मर्यासः ! मर्त्येभ्यो हिताः ! परा एतन परागच्छत हे मद्रजानयः ! मद्रः स्तुत्यो जानिर्जन्म येषां ते तथोक्ताः । रुद्रपुत्राः ! इत्यर्थः । अग्नितपः अग्निना तप्ताः यान्नादयः यथा दीप्ताः तद्वत् प्रदीप्ताः अतश्च भवथ ॥ ४ ॥

सनत् साश्व्यं पशुमुत गव्यं शतावयम् । श्यावाश्वस्तुताय या दोर्वीरायोपबर्बृहत् ॥५॥

सनत् । सा । अश्व्यम् । पशुम् । उत । गव्यम् । शतऽअवयम् ।
श्यावाश्वऽस्तुताय । या । दोः । वीराय । उपऽबर्बृहत् ॥ ५ ॥

स्कन्द० उक्त्वैवं मरुतो याताः[1] पुरुमीळ्हस्य वेश्म ये[2] ।
कथितेन शशीयस्या राजपत्न्या यथा पुरा ॥

तरन्तस्य पुनर्भ्राता वैददश्विर्महायशाः ।
प्रायात् पुरुमीळ्होऽस्मै धेनूनां प्रददौ शतम् ॥

तरन्तपुरुमीळ्हौ यद् ददतुर्वैददश्विनौ ।
शशीयसी तरन्तस्य महिषी मरुतश्च यत् ॥

रथवीतिश्च यद् दार्भ्यः श्यावाश्वायार्चनानसे ।
के ष्ठेत्यत्र स्म तत्सूक्ते श्यावाश्वो निजगाद ह ॥ इति ।

तरन्तपुरुमीळ्हौ नाम द्वौ राजानौ विददश्विनः पुत्रौ यत् धनं श्यावाश्वाय दत्तवन्तौ । यच्च शशीयसी नाम तरन्तस्य राज्ञो महिषी । महिषीति प्रथमपत्न्यभिधानम् । 'दत्तवती । मरुतश्च यद्दत्तवन्तः[3] । यच्च रथवीतिर्नाम दार्भ्यपुत्रः श्यावाश्वाय दुहितरं च अर्चनानसे दत्तवान् । 'के ष्ठा नरः' इत्येतस्मिन् सूक्ते तत्सर्वं श्यावाश्वो निगदितवान् । तत्रैताभिस्तिसृभिर्ऋग्भिः[4] सा शशीयसी-दानं निजगाद । सनत् षणु दाने । दत्तवती । सा अश्व्यम् अश्वसमूहम् पशुम् पशुशब्देनात्र 'गवाश्वप्रभृतीनां च भेदेनोपादानादज'[4] एवोच्यते, न पशुमात्रम् । शुद्धोऽप्ययं समूहवद्वितार्थे द्रष्टव्यः । अजसमूहम् । उत अपि गव्यम् गोसमूहम् शतावयम्, शतपरिमाणसहितमित्यर्थः । का सा ? उच्यते । श्यावाश्वस्तुताय श्यावाश्वेन स्तुताय या दोः बाहुम् वीराय विक्रान्ताय । उपबर्बृहत् बृहू उद्यमने । उद्यच्छति परिमोक्तुमेनमुत्क्षिपति या । तरन्तस्य भार्येत्यर्थः[5] ॥ ५ ॥

वेङ्कट० प्रायच्छत् तरन्तभार्या शशीयसी श्यावाश्वाय अश्वसमूहम् पशुम्, अपि शताविपुर्गं[6] गोसंघं च, श्यावाश्वेन भिक्षमाणेन स्तुताय वीराय वन्दाय या[7] स्वबाहुमुपबर्हं कृतवती, तस्य भार्येत्यर्थः ॥ ५ ॥

मुद्गल० सा तरन्तमहिषी मह्यम् पशुम् सनत् अदात् । किम् ? अश्व्यम् अश्वसमूहात्मकम् । उत अपि

1. याताः मूको. 2-2. नास्ति मूको. 3. 'दैवासिद्द' मूको. 4-4. गवाश्वप्रभृतीनां चाभेदेनो' मूको. 5. 'र्थः सा च मूको. 6. शताविपुर्गं वि'. 7. नास्ति मूको.

च गव्यम् गोसमूहात्मकम् शतावयम् शताविभिर्युक्तम् । स्वश्वात्वस्तुताय स्वश्वाय मया स्तुताय वीराय तरन्ताय या दोः स्वकीयभुजम् उपबर्हत् उपोद्यच्छत् आलिङ्गनाय ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये षड्विंशो वर्गः ॥

उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी । अदेवत्रादराधसः ॥ ६ ॥

उत । त्वा । स्त्री । शशीयसी । पुंसः । भवति । वस्यसी । अदेवऽत्रात् । अराधसः ॥ ६ ॥

स्कन्द० उत शब्दोऽप्यर्थे पुंसः इत्यनेन सम्बन्धयितव्यः । त्वा षष्ठ्यर्थे द्वितीयैषा । तरन्तस्यायं प्रतिनिर्देशः । तरन्तस्य स्त्री । भार्येत्यर्थः । शशीयसी नाम । त्व इति "चा विनिग्रहार्थीयं" सर्वनामानुदात्तम् ( तु. या १,७ ) एकशब्दपर्यायः । तस्मादयं रित्याम् टाप् । त्वा एका । शशीयस्येव एका स्त्री, नान्या काचिदित्यर्थः । पुंसः उत पुंसोऽपि सकाशात् भवति वस्यसी वसु धनम्, अतिशयेन तद्वती वस्यसी । धनवत्तरा । सर्वस्य हि दानेन धनमाविर्भाव्यते । इयञ्च दानं नास्ति पुंसः, अत इयं तस्माद्धनवत्तरा । अथवा वसुशब्देनात्र देयं धनमुच्यते । येन यत्किञ्चित् स्वदानं लक्ष्यते । पुंसोऽपि सकाशात् दातृतरेत्यर्थः । कीदृशात् पुंसः । उच्यते । अदेवत्रात् देवान्यस्त्रायते[२] स देवत्रः । कः पुनरसौ । यः स्तौति । देवा हि स्तूयमाना वीर्येण वर्धन्ते । अतो यस्तान् स्तौति स वीर्यहानितस्त्रायते, तेन स देवत्रः । न देवत्रः अदेवत्रः । तस्माददेवत्रात् । देवानामस्तोतुरित्यर्थः । अराधसः हविर्लक्षणेन धनेन रहितात् । अयष्टुरित्येतदर्थः । यो हि न देवान् स्तौति न यजते स निर्धनो भवत्यल्पधनो वा । निर्धनत्वादल्पधनत्वाद्वा अश्रद्दधानत्वाच्च नैव ददाति । यदपि ददाति तदप्यल्पम् । तस्मात् शशीयसी धनवत्तरा दातृतरा वेत्यर्थः ॥ ६ ॥

वेङ्कट० अपि खलु एका स्त्री शशीयसी नाम पुंसः अपि भवति प्रशस्या देवानामत्रातुः अधनात् ॥ ६ ॥

मुद्गल० उत अपि च हे भ्रातः! त्वा एका शशीयसी तरन्तमहिषी सैव स्त्री. पुंसः पुरुषात् वस्यसी वसीयसी भवति । कस्मात् पुंस इत्युच्यते । अदेवत्रात् देवाः त्रायन्ते स्तुत्यादिना यं स "देवत्रः, न देवत्रः"[३] अदेवत्रः, तस्मात् अराधसः धनरहितात् लुब्धकात् ॥ ६ ॥

वि या जानाति जसुरिं वि तृष्यन्तं वि कामिनम् । देवत्रा कृणुते मनः ॥७॥

वि । या । जानाति । जसुरिम् । वि । तृष्यन्तम् । वि । कामिनम् । देवऽत्रा । कृणुते । मनः ॥७॥

स्कन्द० या च[४] वि जानाति भर्तारम् जसुरिम्[५] जसु "ताडने । श्रमताडितम्"[६] । श्रान्तमित्यर्थः । वि तृष्यन्तम् तृट् पिपासा, पिपासन्तं च विजानाति । वि कामिनम् कामभोगैषिणं[७] च विजानाति । विज्ञाय च यदा यदा परिचरितव्यः तदा च तथैव परिचरति । श्रान्तं मर्दनादिना विश्रमयति । तृष्यते शीतमुदकं ददाति । संभोगैषिणि भोगमित्यर्थः । या च

१-१. चा विनिग्रहार्थीयं मूको. २. देवांस्त्रायते मूको. १-३. नास्ति मूको. ४. नास्ति वि". ५. जसुरिम् मूको. ६-६. जसु श्रमे ताडितम् मूको. ७. "भोगैषिणं मूको.

देवत्रा देवेषु कृणुते कुरुते मनः। नित्यं देवान् पूजयतीत्यर्थः। एवं यच्छब्दश्रुतेः "सनत् सा" (ऋ ५, ६१,५-७) इति तिसृणामप्यासामृचामेकवाक्यताभावात् तिसृभिरपि शशीयसीदानं निगद्यते। आद्ययैवैकया शशीयसीदानं निगद्यते। पराभ्यां तु शशीयसी पुंसोऽपि सकाशाद् वस्यसी भवति या विजानाति भर्तारमित्येवमेकवाक्यताभावात् शशीयसी स्तूयते। यथा च भगवता शौनकेनोक्तम्— "न वा" स्तूयत एतेषु योध्या च स्त्री शशीयसी' इति। व्याख्यातारस्तु— 'सनत् साश्व्यम्' इत्येकया शशीयसी स्तूयते। पराभ्यां तरन्त इति मन्यन्ते। एवं हि आहुः—

"ऋषिस्तु तं सनिं लब्ध्वा गवाश्वमविका अजाः।
अश्वाश्वः परितोषेण तरन्तस्याग्रतः स्थितः॥
दात्रा दत्तं च वेद येन तत्सर्वं परिकीर्तयन्।
'सनत् साश्व्यं पशुम्' इति दृष्ट्वा 'नान्यस्य कस्यचित्'" ॥

'तत्र 'उत त्वा स्त्री शशीयसी' इति द्वाभ्यां स तरन्तमस्तौषीत्' 'सनत् साश्व्यम्' इत्येतया तावत्कर्मणा दानेन शशीयसी स्तूयते इत्यवगन्तव्यम्। उक्तं हि भगवता शौनकेन—

'स्तुतिर्नाम्ना　　　बान्धवकर्मभिः'　　　इति।

'उत त्वा स्त्री' इत्येताभ्यामपि 'तवैव स्त्री वस्यसी नान्या काचित्' इत्येवं तस्य प्राधान्यादुपक्रमणाच्चरन्तः स्तूयते, न शशीयसीति व्याख्येयम् ॥ ७ ॥

वेङ्कट० वि जानाति या क्षुधार्तं पिपासुं च धनकामुकं च अतिथिम्, सा देवेषु कृणुते मनः ॥ ७ ॥

मुद्गल० या शशीयसी जसुरिम् व्यथितं तम् वि जानाति, तृष्यन्तम् पिपासितम् वि जानाति, कामिनम् धनाद्यभिलाषवन्तम् वि जानाति। अनुकम्पया अभिमतं ददातीत्यर्थः। देवत्रा देवेषु मनः कृणुते कुरुते या, सैव स्त्री इति पूर्वेण सम्बन्धः ॥ ७ ॥

उत घा नेमो अस्तुतः पुमाँ इति ब्रुवे पणिः। स वैरदेय इत् समः ॥ ८ ॥

उत। घ। नेमः। अस्तुतः। पुमान्। इति। ब्रुवे। पणिः। सः। वैरऽदेये। इत्। समः ॥ ८ ॥

स्कन्द० तरन्तस्तुतिद्वारेण तद्दानमनयर्चा निगद्यते। उत-शब्दोऽप्यर्थे तृतीयपादस्थेन स इत्येतेन सम्बन्धयितव्यः। घ इति पदपूरणः। स इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यः नेमः अर्धः। कस्य। स्वजायायाः शशीयस्याः। कुत एतत्। जायापत्योः परस्परार्धत्वात्। यथैव हि 'अर्धो वा एष आत्मनो यज्जाया' इति श्रुतेः, अर्धं शरीरमिति लोकप्रसिद्धेः, पत्युरर्धो जाया"। एवमर्धस्य परस्परापेक्षत्वात्पतिरपि जायाया अर्धमित्युपपन्नम्। अस्तुतः। केन। सामर्थ्यान्मत्तोऽन्येन केनचिदस्तुतपूर्व इत्यर्थः। पुमान् तरन्तनामा। सः उत सोऽपि वैरदेये वीरा दानशूरास्तेषां दानम् वीरदेयम्। स्वार्थिकस्तद्धितः। तस्मिन्। इत् इति पदपूरणः। समः सदृशः क्वे

1-1. स सनत् मूको. २. ना मूको ३. मनः कु. ४. तरन्तस्याग्रतः मूको। तरन्तस्याग्रतः कु ५. येन कु. ६. परिकीर्तयत् कु. ७. दृष्ट्वा वि[१] म; दृष्टम् कु ८-८. नास्ति वि[१]. ९-९. शशीयसी द्वाभ्यां तरन्तमस्तौषीद्। उत त्वा स्त्री शशीयसीति। तत्र मूको. १०. तु. बृदे ३, ७. ११. व्याख्येयम् मूको.

यणिः यष्टेः स्तुत्यर्थस्येदं रूपम्। स्तोताऽहम्। केन पुनः समः। अन्या पुरुमीळ्हेन। कुत एतद्। तस्योपमानत्वेनोपादीयमानत्वात्। सदृशस्यैवोपमानत्वात्। यथैव पुरुमीळ्हो धेनुशतं दत्तवान् एवं तरन्तोऽपीत्यर्थः। एवं तरन्तस्तुतिद्वारेण तद्दानं निगद्यते ॥ ८ ॥

वेङ्कट० अपि च खलु अस्याः शशीयस्याः अर्धभूत. पुमान् भर्ता मया अस्तुतः इति तं च स्तौमि स्तोताऽहम्। सः धीरस्य मम दत्ते धने समानः एव शशीयस्याः भवति। समानं साम्य-मनयोरिति ॥ ८ ॥

मुद्गल० उत घ अपि च नेमः अर्धः जायापत्योर्मिलित्वैककार्यकर्तृत्वादेक एव पदार्थः। शशीयस्या अर्धभूतस्तरन्तः पुमान् अस्तुतः इति ब्रुवे बहुधा स्तुतः अपि गुणस्य अतिबाहुल्यत्वात् अस्तुत इति ब्रुवे पणिः स्तोताऽहम्। सः तरन्तः वैरदेये धीराः दानशीलाः वैर्दातव्यं देयम् तस्मिन् धने समः। सर्वेभ्यो दातेत्यर्थः। इत् पूरणः ॥ ८ ॥

उत मेऽरपद् युवतिर्ममन्दुषी प्रति श्यावाय वर्तनिम्।
वि रोहिता पुरुमीळ्हाय येमतुर्विप्राय दीर्घयशसे ॥ ९ ॥

उत। मे। अरपत्। युवतिः। ममन्दुषी। प्रति। श्यावाय। वर्तनिम्।
वि। रोहिता। पुरुऽमीळ्हाय। येमतुः। विप्राय। दीर्घऽयशसे ॥ ९ ॥

स्कन्द० अनेनार्धर्चेन कर्मणा शशीयसी स्तूयते। उत अपि च मे मह्यम् अरपत् रप लप व्यक्तायां वाचि कथनवेलायां च या व्यक्ता वाक् ‘सा रपद्, अनया[1] वाचा कथितवतीत्यर्थः। युवतिः तरुणी शशीयसी नाम तरन्तस्य भार्या ममन्दुषी प्रति मदिरत्र मोदनार्थः। मदि स्तुतिमोदमदस्वप्नकान्तिगतिष्विति। प्रतिशब्दश्च पुरस्तादपकृष्टव्यः। प्रति ममन्दुषी अत्यर्थं प्रतिमोदमाना। प्रीयमाणेत्यर्थः। श्याव.य उत्तरपदलोपोऽत्र द्रष्टव्यः, भीमसेनो भीम इति यथा। श्यावाश्वाय वर्तनिम् पन्थानं पुरुमीळ्हगृहस्य। एवमनेनार्धर्चेन कर्मणा शशीयसी स्तुता। अपरया अर्धर्चया[2] पुरुमीळ्हस्तुतिद्वारेण तद्दानं निगद्यते रोहिता रक्तवर्णाश्वौ पुरुमीळ्हाय पुरुमीळ्हस्य सकाशोऽर्थाय, पुरुमीळ्हं यस्य्रतः इत्येतमर्थमित्यर्थ.। वि येमतुः विविधं धर्षितवन्तौ। कौ। सामर्थ्याच्छशीयावश्वौ[3]। कीदृशाय पुरुमीळ्हाय। उच्यते। विप्राय मेधाविने दीर्घयशसे यो दीर्घयशास्तस्मै ॥ ९ ॥

वेङ्कट० अपि च मह्यम् प्रति अकथयत् युवतिः मादयन्ती इदम् श्यावाश्व एव श्यावश्वस्ते मार्गम्। अथ मां रोहितवर्णावश्वौ दीर्घकीर्तिं मेधाविनं पुरुमीळ्हं च प्रति भक्षणाय गन्तुं (?) तेन मार्गेण वि येमतुः ॥ ९ ॥

मुद्गल० उत अपि च श्यावाय श्यावाश्वाय मे मह्यम् अरपत् अलपत् स्पष्टमावष्ट। किम्। वर्तनिम् मार्गम्। कीदृशी सा। युवतिः प्रति ममन्दुषी प्रतिमोदमाना। कस्मै। दीर्घयशसे

---

1. अनयेत्या वि; नास्ति प एषं. 2-2. शाखाते नास्ति मूको. 3. अर्धर्चा मूको.

प्रसूतान्वाय पुरुमीळ्हाय एतन्नामकाय प्रभूतगृहाय विप्राय, पुरुमीळ्हं प्राप्तुमित्यर्थः। तदर्थम् रोहिता रोहितवर्णौ मह्यौ शशीयस्या दत्तौ नि येमतुः घृतवन्तावित्यर्थः ॥ ९ ॥

यो मे॑ धे॒नूनां॑ श॒तं वैद॑दश्वि॒र्यथा॒ दद॑त् । त॒रन्तइ॑व मं॒हना॑ ॥ १० ॥

यः । मे॒ । धे॒नूना॑म् । श॒तम् । वैद॑त्ऽअश्विः । यथा॑ । दद॑त् । त॒रन्तः॑ऽइव । मं॒हना॑ ॥ १० ॥

स्कन्द० 'यः । कतमः । उच्यते'[1] । यः पुरुमीळ्हः मे मह्यम् धेनूनाम् गवाम् शतम् वैददश्विः यथा श्यावाश्वाख्यानविदस्तु 'उत घा नेमः' (ऋ ५,६१,८) इत्यादिभिस्तिसृभिः पुरुमीळ्हः स्तूयत इति मन्यन्ते —

शशीयसीं तरन्तं च स्तुत्वा दानमथो मुनिः ।
'उत घा नेमः' इत्याभिः[2] पुरुमीळ्हमकीर्तयत् ॥ इति ।

तत्र 'उत घा नेमः' इत्यत्र तावत् 'नेमो अस्तुतः पुमान्' इत्येतेन पुरुमीळ्ह उच्यते, न तरन्त इति व्याख्येयम् । नेमत्वं चास्य स्वनामापेक्षं वा यथा व्याख्यातम्, अथवा भ्रात्रपेक्षम् । भ्रातुस्तरन्तस्यार्धं इति । कथं भ्राता भ्रातुरर्धः । उच्यते — 'अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि' (माश १४,९,४,८) इति मन्त्रवर्णात्,

पतिर्जायां[3] प्रविशति गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥

तज्जाया जाया भवति यदस्यां जायते पुनः । (ऐब्रा ७,१३) इति च श्रुतेः पितुः पुत्र आत्मा । ततश्च पितापुत्रयोरेकत्वाद् द्वौ भ्रातरावेक आत्मा द्विधा विभक्तः । तत्रैकात्म्यात् तयोरप्यर्धं परस्परापेक्षम् । 'स वैददेवे' इत्यत्रापि स पुरुमीळ्हः सम इति व्याख्येयम् । केन समः । भ्राता तरन्तेन । कुत एतत् । परस्यामपि 'वैददश्विर्यथा ददत्' इति तरन्तेनास्योपमानदर्शनात् । परे अप्यृचौ यं मेऽदात्[4] पन्थानम् तेन गताय मह्यम्, यस्मै चि रोहिता पुरुमीळ्हाय येमतुः, यश्च धेनूनां शतं ददत्, स तरन्त इव मंहना इति एव वाक्यशेषाध्याहारेण[5] एकवाक्यभावमापाद्य पुरुमीळ्ह आभ्यां स्तूयत इति व्याख्येये[6] ॥ १० ॥

वेङ्कट० यः मे धेनूनाम् शतम् विददश्वस्य पुत्रः तरन्तः इव मार्गं प्रति गन्तुम् । यद्वा — तरन्तः इव महत्त्वेन ॥ १० ॥

मुद्गल० इयं पुरुमीळ्हस्तुतिः । वैददश्विः पुरुमीळ्होऽपि यः मे मह्यम् धेनूनाम् शतम् यथा येन प्रकारेण ददत् दत्तवान् । तथा मंहना महनीयानि धनान्यपि ददत् तरन्तः इव । स यथा धेनुशतं बहुविधं धनं च दत्तवान्, तद्वद् वैददश्विः पुरुमीळ्होऽपि ददत् । तं स्तुवे इति शेषः ॥ १० ॥

इति चतुर्थाष्टके तृतीयाध्याये सप्तविंशो वर्गः ॥

---

1-1. या कतमः मूको. 2. °भिर्भिः मूको. 3. पतिर्जायाम् मूको. 4. °दर्शे मूको. 5. °वाक्याध्याहारा° मूको. 6. °ख्येयम् मूको.

य ईं वहन्त आशुभिः पिबन्तो मदिरं मधु । अत्र श्रवांसि दधिरे ॥ ११ ॥

ये । ईम् । वहन्ते । आशुऽभिः । पिबन्तः । मदिरम् । मधु । अत्र । श्रवांसि । दधिरे ॥ ११ ॥

स्कन्द० "ततस्तु मरुतो देवान् रुद्रसूनूनबुध्यत[1] ॥

'य ईं वहन्त'[1] इत्याभिर्वृचा[2] तुष्टाव तांस्ततः ।

अतिक्रमं हि तमृषिर्मेने विपुलमात्मनः ।

'यत्र दृष्ट्वैव[3] तुष्टाव यच्च 'के ष्ठ(श्वा[1] इ)ति पृष्टवान् ।" ( बृहद्दे ५, ६९-७१ ) इति[4] चतसृभिराभिः[5] ऋग्भिः[6] प्रत्यक्षानपि सतो मरुतः परोक्षवत् स्तौति । ये मरुतः । ईम् इति पदपूरणः । वहन्ते प्राप्नुवन्ति । आत्मानं गमयन्तीत्यर्थः[7] । आशुभिः शीघ्रैरश्वैः पिबन्तः मदिरम् मदकरम् मधु माध्वीकादिकं लोके प्रसिद्धं पानद्रव्यम् । अथवा पिबन्त इति शुद्धोऽपि[8] सप्तम्यर्थे द्रष्टव्यः । पिपासन्तः मदिरं मधु सोमलक्षणम् । ये अत्र समस्तायां पृथिव्यां श्रवांसि दधिरे ददति यष्टृभ्यः स्तोतृभ्यश्च ॥ ११ ॥

वेङ्कट० ये गच्छन्ति[9] आशुभिः अश्वैः मदकरम् मधु पिबन्तः, ते अस्यां पृथिव्याम् अन्नानि स्थापयन्ति ॥ ११ ॥

मुद्गल० ये मरुतः ईम् इदानीम् आशुभिः शीघ्रगामिभिरश्वैः वहन्ते उह्यन्ते । किं कुर्वन्तः । मदिरम् मदकरम् मधु सोमरसम् पिबन्तः । ये मरुतः अत्र अस्मिन् देशे श्रवांसि स्तुतिजनितानि यशांसि दधिरे धारयन्ति ॥ ११ ॥

येषां श्रियाधि रोदसी विभ्राजन्ते रथेष्वा । दिवि रुक्मइवोपरि ॥ १२ ॥

येषाम् । श्रिया । अधि । रोदसी इति । विऽभ्राजन्ते । रथेषु । आ । दिवि । रुक्मःऽइव । उपरि ॥

स्कन्द० येषाम् इति प्रथमार्थे षष्ठी । ये च श्रिया अधि रोदसी द्यावापृथिव्योः विभ्राजन्ते विविधं भ्राजन्ते । रथेषु आ अत्राधिकरणस्योपसर्गस्य च श्रुतेर्योग्यक्रियापदाध्याहारः । रथेष्वारूढाः । कथं विभ्राजन्ते । उच्यते । दिवि रुक्म इव उपरि यथाऽयमुपरि द्युलोके स्थितः आदित्यः तद्वत् । द्वयोर-प्यनयोर्ऋचोः[10] यच्छब्दश्रुतेस्तेषामिति षष्ठ्यन्ततच्छब्दस्य अध्याहृत्योत्तरयर्चैकवाक्यता योज्या ॥ १२ ॥

वेङ्कट० येषाम् श्रिया अधिष्ठिते द्यावापृथिवी, ये च रथेषु विभ्राजन्ते, दिवि आदित्यः इव । उत्तरस्य सम्बन्धः ॥ १२ ॥

मुद्गल० येषाम् मरुताम् श्रिया कान्त्या रोदसी द्यावापृथिव्यौ अधि अधिष्ठिते भवत इति शेषः ।

---

१. °बुध्यत° कु. २. इत्याभिर्वृ° मूको. ३-३. यद् दृष्ट्वैव न मूको. ४. नास्ति मूको. ५. °राभि कु. ६. ऋग्भिः मूको. ७. गमयन्तीत्यर्थः मूको. ८. शुद्धोऽपि मूको. ९. गच्छन्ति वि[1] ह्यपे, गच्छन्ति ह. १० °नयोरृचो। मूको.

यस्मादेते मरुतः रथेषु विभ्राजन्ते विशेषेण दीप्यन्ते। रुक्मासः। उपरि उपरिभूते दिवि द्युलोके रुक्मः रोचमान आदित्यः इव। आ पूरणः ॥ १२ ॥

युवा स मारुतो गणस्त्वेषरथो अनेद्यः। शुभंयावाप्रतिष्कुतः ॥ १३ ॥

युवा। सः। मारुतः। गणः। त्वेषऽरथः। अनेद्यः। शुभम्ऽयावा। अप्रतिऽस्कुतः ॥ १३ ॥

स्कन्द० अत्रापि तच्छब्दश्रुतेः मारुतो गण इत्येतत्सम्बन्धी यच्छब्दोऽध्याहार्यः। येषां वो मरुतां मरुत्समूहरूपो गणः सः[1] युवा तरुणः त्वेषरथः दीप्तरथश्च। अनेद्यः प्रशस्यनामैतत् ( तु. निघ ३,८ )। प्रशस्यश्च। शुभंयावा शुभमुदकम् तद् मेघस्थं प्रति गमनशीलश्च। अप्रतिष्कुतः स्कुञ् आप्रवणे। अप्रतिगतश्च युद्धे चाभियुञ्जानः अप्रत्यभियुक्तपूर्वः केनचिदित्यर्थः ॥ १३ ॥

वेङ्कट० युवा सः मारुतः गणः दीप्तरथः अकुत्स्यः शुभं गच्छन् शत्रुभिः अप्रतिकृतः ॥ १३ ॥

मुद्गल० सः मारुतः गणः युवा नित्यतरुणः त्वेषरथः दीप्तरथः अनेद्यः अनिन्द्यः शुभंयावा शोभनं गन्ता अप्रतिष्कुतः अप्रतिशब्दितः एवं महानुभावो गणो दीप्यत इति ॥ १३ ॥

को वेद नूनमेषां यत्रा मदन्ति धूतयः। ऋतजाता अरेपसः ॥ १४ ॥

कः। वेद। नूनम्। एषाम्। यत्र। मदन्ति। धूतयः। ऋतऽजाताः। अरेपसः ॥ १४ ॥

स्कन्द० कः वेद जानाति। न कश्चिदपीत्यर्थः। नूनम् इति पदपूरणः। एषाम् मरुतां स्थानम्[1]। यत्र[1] मदन्ति[2] मदतिरर्चतिकर्माऽप्यत्र, इह तु लाभप्याप्त गत्यर्थः। गच्छन्ति धूतय कम्पयितारः शत्रूणां मेघानां वा। ऋतजाताः[1] ऋतमुदकम्, तेन दातव्येन निमित्तभूतेन जाताः। वृष्टिप्रदानार्थमेवोत्पन्ना इत्यर्थः। अथवा ऋतशब्देनात्र सर्वगतत्वात् द्यौः रुद्रो वोच्यते, तेन(?) जाता दिवो रुद्रस्य वा पुत्राः[1] अरेपसः अपापाः ॥ १४ ॥

वेङ्कट० कः वेद एषाम् तत् स्थानम्[1] यत्र मदन्ति कम्पयितारो यज्ञार्थं जाताः अपापाः ॥ १४ ॥

मुद्गल० एषाम् मरुतां स्थानम् कः वेद को जानाति। नूनम् इदानीम् यत्र स्थाने धूतयः शत्रूणां कम्पकाः मदन्ति हृष्यन्ति ऋतजाताः यज्ञार्थमुत्पन्नाः अरेपसः अपापाः ॥ १४ ॥

यूयं मर्तं विपन्यवः प्रणेतार इत्था धिया। श्रोतारो यामहूतिषु ॥ १५ ॥

यूयम्। मर्तम्। विपन्यवः। प्रऽनेतारः। इत्था। धिया। श्रोतारः। यामऽहूतिषु ॥ १५ ॥

स्कन्द० चतसृभिः परोक्षवत् स्तुत्वाऽनया प्रत्यक्षवत् स्तौति। यूयम् मर्तम् मनुष्यं हे विपन्यवः! विपन्युरिति मेधाविनाम ( तु निघ ३,१५ )। मेधाविनः! प्रणेतारः तत्कालिकं चाचं भृशं इत्यर्थः। मनुष्यप्रणयनशीलाः। स्वभावेनैव मनुष्यान् नयथेत्यर्थः। इत्था अमुत्र स्वर्गलोके धिया कर्मणा यागाख्येन। यो यागं करोति तमित्यर्थः। अथवा 'इत्था' (निघ ३,१०) इति सत्यनाम। धीरपि प्रज्ञा। सत्यया स्वया प्रज्ञया। श्रोतारः च यामहूतिषु यान्ति देवा यस्मिन्

1. नास्ति मूको. 2. सत्या° वि°.

स यामो यज्ञः । हूतयः आह्वानानि । द्वितीयार्थे सप्तमी । यज्ञाह्वानानि । स्तुत्यप्रदानं[1] पश्यचां निगद्यते ॥ १५ ॥

वेङ्कट० यूयम् मनुष्यं[2] हे मेधाविनः! प्रणयथ सत्यमेव कर्मणा, श्रोतारः च, [3]याम आगमनम्[3], आगमनार्थेषु तस्याह्वानेषु ॥ १५ ॥

मुद्गल० हे विपन्यवः! स्तुतिकामा मरुतः! यूयम् मर्तम् यजमानम् इत्था अनया धिया इदानीं कृतप्रकारयाऽस्मदनुबुद्ध्या प्रणेतारः प्रकर्षेण प्रापयितारोऽभिमतम्। यामहूतिषु यज्ञेषु श्रोतारः आह्वानानाम् ॥ १५ ॥

इति चतुर्थाष्टके तृतीयाध्याये अष्टाविंशो वर्गः ॥

ते नो वसूनि काम्या पुरुश्चन्द्रा रिशादसः । आ यज्ञियासो ववृत्तन ॥ १६ ॥

ते । नः । वसूनि । काम्या । पुरुऽचन्द्राः । रिशादसः । आ । यज्ञियासः । ववृत्तन ॥ १६ ॥

स्कन्द० ते इति तच्छब्दश्रुतेः प्रत्यक्षकृतश्चायं मन्त्रः। पुरुश्चन्द्राः इति च नाऽऽमन्त्रितम्। अतो यच्छब्द-मध्याहृत्यैकवाक्यत्वं[4] नेयम्। ये यूयम् पुरुश्चन्द्राः चन्द्र.[5] चन्दते. कान्तिकर्मणः। बहुकान्ताः। ते नः अस्मान् प्रति वसूनि धनानि रुक्माण्यानि काम्या काम्यानि अत्यन्तोत्कृष्टानि हे रिशादसः! हिंसितॄणां[6] क्षेप्तारः! यज्ञियासः। यज्ञियाः। यज्ञार्हाः! आ ववृत्तन अस्मदर्थमावर्तयत। अस्मभ्यं दत्तेत्यर्थः। एवमनया वाच्यसमावत्वं भावि रुक्मदानं निगद्यते। [7]अथ वा[7] आ ववृत्तनेत्ययं लोट् भूतकालेऽपि ज्ञायते। ततो भूतम् ॥ १६ ॥

वेङ्कट० ते अस्मभ्यम् वसूनि कमनीयानि बहूनां ह्लादयितारः शत्रूणामसितारः! [8]आ ववृत्तन[8] हे यज्ञियाः! ॥ १६ ॥

मुद्गल० हे रिशादसः! हिंसकानां शत्रूणाम् अत्तारः! हे यज्ञियासः! यज्ञार्हाः[1] पुरुश्चन्द्राः प्रभूताह्लादकधनाः ते यूयम् नः अस्मभ्यम् वसूनि धनानि काम्या स्पृहणीयानि आ ववृत्तन आवर्तयत ॥ १६ ॥

एतं मे स्तोममूर्म्ये दार्भ्याय परा वह । गिरो देवि रथीरिव ॥ १७ ॥

एतम् । मे । स्तोमम् । ऊर्म्ये । दार्भ्याय । परा । वह । गिरः । देवि । रथीःऽइव ॥ १७ ॥

स्कन्द० 'मरुत्सु तु प्रयातेषु श्यावाश्वः सुमहायशाः ।
प्रादुर्भूतार्थमात्मानं शालाऽनिकुलनन्दनः ॥
रथवीतिं दुहितरमगच्छन्मनसा तदा ।
[9]स सद्य ऋषिरात्मानं[9] प्रवक्ष्यन् रथवीतये ॥

एत मे स्तोममित्याभ्यां दौत्ये रात्रीं न्ययोजयत्[10] ।' (बृदे ५,७२-७४)

1. तदनुग्रहमादानं वि; तदनुग्रहमादानं वि[1] अ. 2. मनुष्याः वि; [1]भ्या रूपं. 3-3. तस्यागमनम् मूको. 4. [1]स्यत्वं मूको. 5 चन्द्र मूको. 6. हिंसिता मूको. 7-7. अय व मूको. 8-8. मावर्तत मूको. 9-9 स सत्यमृषिमात्मानम् मूको. 10. न्यवेदयत् मूको.

योऽयं पार्श्वीमस्याः[1] वरन्तस्य पुरुमीळ्हस्य मरुतां च स्तुवः, एतम् मे स्तोमम् हे ऊर्म्ये। रात्रि! दार्भ्याय दर्भपुत्राय रथवीतये। परा वह पराक्[2] गत्वा आचक्ष्व, येन मामृषिं ज्ञात्वा दुहितरं दद्यादित्यर्थः। गिरः सन्देशलक्षणाश्च वाचः हे देवि! रथीरिव[3] यथा कश्चिद्रथी भूभृतो[4] राजन्यस्य वा कस्यचित् सन्देशं शीघ्रं प्रापयेत्[5] तद्वदित्यर्थः ॥ १७ ॥

वेङ्कट० एतम् मे स्तोमम् हे रात्रि! दार्भ्याय राज्ञे रथवीतये अवगमय[6] गिरः च इमा दुहितृयाचनविषयाः, रथवान् इव क्षिप्रम् ॥ १७ ॥

मुद्गल० हे ऊर्म्ये! रात्रि देवि! मे मदीयम् एतम् स्तोमम् मरुद्विषयः स्तुवं स्तोत्रमहं मन्त्रदृक् भूत्वा मरुतः स्तुतवानित्येवम् श्यावाश्वाय परा पराङ्मुखी दार्भ्याय दार्भ्याभिमुखी सती वह प्रापय। हे रात्रि! देवि! गिरः स्तुतीर्मरुद्विषयाः परा वह, रथीः इव रथी यथा रथेऽभिप्रेतम् वस्तु स्थापयित्वाऽभिमतदेशं प्रापयति तद्वत् ॥ १७ ॥

उ॒त मे॑ वोचता॒दिति॑ सु॒तसो॑मे॒ रथ॑वीतौ। न कामो॒ अप॑ वेति मे ॥ १८ ॥

उ॒त। मे॒। वो॒च॒ता॒त्। इति॑। सु॒तऽसो॑मे। रथ॑ऽवीतौ। न। काम॑ः। अप॑। वे॒ति॒। मे॒ ॥ १८ ॥

स्कन्द० उत अपि च। "मे इति" षष्ठीश्रुतेर्वचनेनेति शेषः[7-8]। मे मम "वचनेन वोचतात् इति"। स्तोमकरणाद् अहम् ऋषिर्जातः त्वद्दुहितरं च तथैव प्रार्थये इति ज्ञात्वा मे देहीत्येतद् ब्रूया इत्यर्थः।

'ऋषेर्नियोगमाज्ञाय देव्या राम्या प्रचोदितः।
आदाय कन्यकां दातुमुपेयायार्चनानसम् ॥
पादौ तस्योपसंगृह्य स्थित्वा प्रह्वः कृताञ्जलिः।
रथवीतिरहं दार्भ्य इति नाम शशंस च[9] ॥
मया संगतिमिच्छन्तं[10] त्वां प्रत्याचक्षि यत् पुरा।
तत् क्षमस्व नमस्तेऽस्तु मे मा स्म भगवन्! क्रुधः[11] ॥
क्रुद्धः पुनः स्वयमृषिः पित इति भगवन्नृषेः।
इन्तां[12] प्रतिगृह्णीष्व स्नुषामित्येवमब्रवीत्।
तस्मै ददावश्वशतं स राजा, अलङ्कृतां चापि सुतां स्नुषार्थम्।
विवाहवह्निं तु ददौ नरेशः, श्वेतं इमानां दुहितुः स मेने ॥
गवां सहस्रं वसु च प्रभूतं, तस्मात् ततोऽस्तेऽथ वनं जगाम।' (बृ. दे ५,७५-७९.) ॥

तदेतद् दानकथनद्वारेण परस्यां निगद्यते ॥ १८ ॥

वेङ्कट० अपि च मे ब्रूहि इत्यम् सुतसोमे रथवीतौ न कामः तव दुहितृविषयो मम अपगच्छतीति ॥ १८ ॥

मुद्गल० हे ऊर्म्ये! रात्रि देवि! उत अपि च मे माम् वोचतात् ब्रूहि। किम्। इति इत्थम्। कथमिति। सुतसोमे कृतसोमयागे रथवीतौ राज्ञि[13] मे कामः तत्पुत्रीविषयः न अप वेति नापगच्छति। इत्थं वोचतात् ॥ १८ ॥

---

१. दार्भीवरस्यां मूको. २. पराम मूको. ३. रथवीतिरिव मूको. ४. भूभो मूको. ५. पातरेव मूको. ६. अवग° वि° भर्प. ७-७. नास्ति मूको. ८. नास्ति मूको. ९. स्व मूको. १०. त्वामिति° मूको. ११. क्रुधी मूको. १२. °न्तः मूको. १३. राज्ञे मूको.

एष क्षेति रथवीतिर्मघवा गोमतीरनु । पर्वतेष्वपश्रितः ॥ १९ ॥

एषः । क्षेति । रथऽवीतिः । मघऽवा । गोऽमतीः । अनु । पर्वतेषु । अपऽश्रितः ॥ १९ ॥

स्कन्द० "कन्यां दत्त्वा कृतार्थं तं श्यावाश्वोऽथ वनं गतम् ।
रथवीतिमपश्यन्तीं रौमेक्ष्यावेण चक्षुषा ॥
रम्ये हिमवतः पृष्ठे 'एष क्षेती(ति' इ)ति सोऽब्रवीत्' ." ( बृदे ५,७४:७५ )

एषः क्षेति निवसति रथवीतिः मघवा 'मघम्' ( निघ २, १० ) इति धननाम । दैये चात्र धने वर्तते नान्यस्मिन् । तेन च हविःसम्बन्धिदानं लक्ष्यते । धनदानवान् । अश्वशतादेः पूर्वोक्तस्य धनस्य दातेत्यर्थः । गोमतीः अनु गोशब्द उदकवचनः । 'यस्य गा अन्तरस्मनः' ( ऋ ६,४३,३ ) इति यथा । उदकवतीर्नदीः प्रति । पर्वतेषु हिमवच्छिखरभूतेषु अपश्रितः । एवम् अनयर्चा रथवीतिधनकथनद्वारेण तद्दत्तं निगदितमस्ति । "रथवीतिश्च यद् दार्भ्यः श्यावाश्वायार्चनानसे । के ष्ठे (ष्ठ इ)त्यत्र स्म तत् सूक्ते श्यावाश्वो निजगाद ह ॥' इति[1] शौनकस्य वचनमन्वेष्यार्थम् । न ह्यस्मिन् सूक्तेऽन्यया कयाचिदृचा रथवीतिदानं निगदितम् ॥ १९ ॥

वेङ्कट० एषः निवसति रथवीतिः धनवान् गोमतीः नदीः लक्षीकृत्य गोमत्याः समीपेऽपि तस्यावासः[1] । तत्र च तपोऽर्थम् पर्वतेषु अपश्रितः । तं गत्वा मदीयं वचनं ब्रूहीति ॥ १९ ॥

मुद्गल० एषः रथवीतिः मघवा धनवान् गोमतीः अनु उदकवतीर्नदीः[2] अनुसृत्य नदीनां तीरे क्षेति निवसति पर्वतेषु पर्वतप्रान्तेषु अपश्रितः आश्रितः ॥ १९ ॥

इति चतुर्थाष्टके तृतीयाध्याये एकोनत्रिंशो वर्गः ।

## [६२]

ऋतेन ऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचन्त्यश्वान् ।
दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यम् ॥ १ ॥

ऋतेन । ऋतम् । अपिऽहितम् । ध्रुवम् । वाम् । सूर्यस्य । यत्र । विऽमुचन्ति । अश्वान् ।
दश । शता । सह । तस्थुः । तत् । एकम् । देवानाम् । श्रेष्ठम् । वपुषाम् । अपश्यम् ॥ १ ॥

वेङ्कट० ऋतमिति । हे मित्रावरुणौ! उदकेन युवयोः स्थानम् अपिहितम् उदकमध्ये वर्तते इत्यर्थः । सूर्यस्य यत्र अश्वान् पश्चिमायां दिशि देवाः विमुञ्चन्ति [3]सारथयो वा[3], तत्र च तत् स्थानम् अभवदिति । तत् च एकम् स्थानम् दश शतानि देवानाम् सह अधितिष्ठन्ति, तेषां देवानां तस्मिन् स्थाने वसताम् श्रेष्ठम् तत् स्थानं पश्यामि ॥ १ ॥

* 'ऋतेन ऋतम्' इति नवर्चं षष्ठं सूक्तम् । आत्रेयः श्रुतविद् ऋषिः । त्रिष्टुप् छन्दः । मित्रावरुणौ देवता ॥

१. कन्यकां दत्त्वा कृतार्थं सन्तं वनं रथवीतिं तपस्यन्तं संप्रेक्षस्व पश्यन्: स्वचक्षुषा रम्ये हिमवतः पृष्ठे एष क्षेति सोऽब्रवीत् मूको. २-२. नुदितम् मूको. ३. तस्य वासः वि' स्प. ४. 'दीरनु मूको. ५-५. सारथयो वा ल.

सूर्यस्य ऋतम् सत्यभूतं मण्डलम् ऋतेन उदकेन अपिहितम् आच्छादितम् ध्रुवम् शाश्वतम् अपश्यमिति सम्बन्धः। यत्र वाम् युवाभ्यां [1]स्थितं वदित्यर्थः[1]। यत्र यस्मिन् मण्डले स्थितान् अश्वान् विमुचन्ति विमोचयन्ति स्तोतारः। मन्देहादिभिर्निरुद्धानित्यर्थः। यस्मिन् च मण्डले दश शता शतानि[2] सहस्रसङ्ख्याका रश्मयः सह तस्थुः तिष्ठन्ति, देवानाम् वपुषाम् च युष्माकं तेजोवताम् अग्न्यादीनाम् श्रेष्ठम् एकम् मुख्य प्रशस्यम् तत् मण्डलम् अपश्यम् ॥ १ ॥

तत् सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे ।
विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥ २ ॥

तत् । सु । वाम् । मित्रावरुणा । महिऽत्वम् । ईर्मा । तस्थुषीः । अहंऽभिः । दुदुह्रे ।
विश्वाः । पिन्वथः । स्वसरस्य । धेनाः । अनु । वाम् । एकः । पविः । आ । ववर्त ॥ २ ॥

वेङ्कट० तत् सुष्ठु वाम् दोग्धि हे मित्रावरुणौ! महत्वम् आदित्यः तत्र स्थिताः अपः अहभिः। आदित्यः मैत्रावरुणं तेजो दोग्धीति। विश्वाः पिन्वथः च युवामादित्यस्य अपः। तौ वाम् आदित्यस्य एकः रश्मिः अनु आ वर्तते ॥ २ ॥

मुद्गल० हे मित्रावरुणा! मित्रावरुणौ! वाम् युवयोः तत् महित्वम् सु सुष्ठु। किं तत्[3]। ईर्मा सततगन्ता आदित्यः अहभिः अहोभिः तस्थुषीः स्थावरभूताः अपः दुदुह्रे दुग्धे। किञ्च स्वसरस्य स्वयं सर्तुरादित्यस्य विश्वाः सर्वाः धेनाः लोकानां प्रीणयित्रीर्युवां पिन्वथः वर्धयथः। वाम् युवयोः एकः अप्रतियोगी पविः रथः अनु आ ववर्त अनुक्रमेण परिभ्रमति ॥ २ ॥

अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः ।
वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू ॥ ३ ॥

अधारयतम् । पृथिवीम् । उत । द्याम् । मित्रऽराजाना । वरुणा । महःऽभिः ।
वर्धयतम् । ओषधीः । पिन्वतम् । गाः । अव । वृष्टिम् । सृजतम् । जीरदानू इति जीरऽदानू ॥

वेङ्कट० अधारयतम् पृथिवीम् अपि च द्याम् हे मित्रावरुणौ! राजानौ! हविर्भिः। वर्धयतम् ओषधीः। पयांसि अपि पिन्वतम्। वृष्टिम् च अव सृजतम् हे क्षिप्रदानौ! ॥ ३ ॥

मुद्गल० हे मित्रराजाना! मित्रराजानौ! मित्रभूताः स्तोतारो राजान ईश्वरा याभ्यां भवन्ति तौ हे वरुणा! मित्रावरुणौ! महोभिः तेजोभिः स्वसामर्थ्यैः पृथिवीम् उत अपि च द्याम् अधारयतम्। हे देवौ! युवाम् ओषधीः वर्धयतम्। गाः पिन्वतम् गवादीन् वर्धयतम्। तदर्थम् वृष्टिम् अव सृजतम् अधोमुखं प्रेरयतं हे जीरदानू! क्षिप्रदानौ! ॥ ३ ॥

आ वामश्वासः सुयुजो वहन्तु यतरश्मय उप यन्त्वर्वाक् ।
घृतस्य निर्णिगनु वर्तते वामुप सिन्धवः प्रदिवि क्षरन्ति ॥ ४ ॥

---

1. स्थितमित्यर्थः मूको. 2. शतानि मूको.

आ । वाम् । अश्वासः । सुऽयुजः । वहन्तु । यतऽरश्मयः । उप । यन्तु । अर्वाक् ।
घृतस्य । निःऽनिक् । अनु । वर्तते । वाम् । उप । सिन्धवः । प्रऽदिवि । क्षरन्ति ॥ ४ ॥

वेङ्कट० आ वहन्तु वाम् अश्वाः सुयुजः, नियतप्रग्रहा[1] उप गच्छन्तु अभिमुखम् । घृतस्य रूपम् वाम् अनु वर्तते 'परिवृतौ युवामुदकेन'[1] । सिन्धवः[2] उप क्षरन्ति युवयोः सकाशात् प्रदीप्ते अन्तरिक्षे ॥ ४ ॥

मुद्गल० हे मित्रावरुणौ! वाम् युवाम् अश्वासः अश्वाः सुयुजः सुष्ठु रथेषु युक्ताः सन्तः आ वहन्तु, यतरश्मयः सारथिनियतप्रग्रहास्ते अर्वाक् उप यन्तु । घृतस्य उदकस्य निर्णिक् रूपम् वाम् अनु वर्तते अनुगच्छति । किञ्च प्रदिवि पुराणाः सिन्धवः नद्यः उप क्षरन्ति उपगच्छन्ति युवयोः अनुग्रहात् ॥ ४ ॥

अनु॑ श्रु॒ताम॒मतिं॒ वर्ध॑दु॒र्वीं ब॒र्हिरि॑व॒ यजु॑षा॒ रक्ष॑माणा ।
नम॑स्वन्ता धृतद॒क्षाधि॒ गर्ते॒ मित्रास॑थे वरुणे॒ळास्व॒न्तः ॥ ५ ॥

अनु॑ । श्रु॒ताम् । अ॒मति॑म् । वर्ध॑त् । उ॒र्वीम् । ब॒र्हिःऽइ॑व । यजु॑षा । रक्ष॑माणा ।
नम॑स्वन्ता । धृ॒त॒ऽद॒क्षा । अधि॑ । गर्ते॑ । मित्र॑ । आसा॑थे॒ इति॑ । व॒रु॒ण॒ । इळा॑सु । अ॒न्तरिति॑ ॥ ५ ॥

वेङ्कट० 'हे मित्रावरुणौ!'[3] विश्रुतं भवतोः रूपम् वर्धत् विस्तृतम् बर्हिः इव यजुषा 'अध्वर्युः उपरक्षमाणो'[4] हविष्मन्तौ हे धृतबलौ ! रथस्योपरि अनु आसाथे पृथिवीषु अन्तः देवयजनेषु ॥ ५ ॥

मुद्गल० श्रुताम् विश्रुताम् अमतिम् शरीरदीप्तिम् अनु वर्धत् अनुवर्धयन्तौ । बर्हिः यज्ञः । सः इव स यथा यजुषा मन्त्रेण[5] रक्ष्यते । तद्वत् उर्वीम् भूमिम् रक्षमाणा पालयन्तौ नमस्वन्ता अन्नवन्तौ हे धृतदक्षा! आत्तबलौ![6] मित्र! वरुण! मित्रावरुणौ! युवाम् उक्तलक्षणौ सन्तौ इळासु यागभूमिषु अन्तः मध्ये गर्ते अधि रथे आसाथे उपविशथः[7] ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये त्रिंशो वर्गः ॥

अक्र॑विहस्ता सु॒कृते॑ पर॒स्पा यं त्रासा॑थे वरुणे॒ळास्व॒न्तः ।
राजा॑ना क्ष॒त्रमहृ॑णीयमाना स॒हस्र॑स्थूणं बिभृथः स॒ह द्वौ ॥ ६ ॥

अक्र॑विऽहस्ता । सु॒ऽकृते॑ । प॒रः॒ऽपा । यम् । त्रासा॑थे॒ इति॑ । व॒रु॒णा॒ । इळा॑सु । अ॒न्तरिति॑ ।
राजा॑ना । क्ष॒त्रम् । अहृ॑णीयमाना । स॒हस्र॑ऽस्थूणम् । बि॒भृ॒थः॒ । स॒ह । द्वौ ॥ ६ ॥

वेङ्कट० क्रविर्हिंसाकर्मा । अहिंसितहस्तौ यजमानाय अत्यन्तं रक्षकौ हे मित्रावरुणौ! यम् रक्षथः देवयजनेषु, तस्मै यजमानाय राजानौ धनम् अक्रुध्यन्तौ प्रयच्छथः, तौ युवाम् सहस्रस्थूणम् रथं च सह धारयथः ॥ ६ ॥

---

1-1. परिवृतैरुदकैर्युवाम्' अ; '°रे नौवाभु' वि' लर्. 2. नास्ति मूको. 3-3. नास्ति मूको.
4-4. 'युंयपे रक्ष' वि' लर्; 'युंरपे रक्ष' ए. 5. °ण रक्षमाणा मूको. 6. आयतबलौ मूको. 7. °विशथः मूको.

मुद्गल० अकविद्हस्ता अकृपणहस्तौ । कस्मै । सुकृते शोभनस्तुतिकर्त्रे । परस्पा परस्तात् पातारौ । हे वरुण[1]! मित्रावरुणौ! युवाम्[2] यम् यजमानम् इळासु यागभूमिषु अन्तः मध्ये त्रासाथे रक्षथः, तस्मै सुकृते अकविद्हस्ता परस्पा भवथ इति सम्बन्धः । किञ्च युवाम् राजाना राजमानौ अहृणीयमाना अक्रुध्यन्तौ द्वौ परस्परम् सह[3] साहित्येन क्षत्रम् धनम् सहस्रस्थूणम् अनेकस्तम्भोपेतं सौधादिरूपं गृहं च बिभृथः धारयथः सुकृते यजमानाय ॥ ६ ॥

हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्य१श्वाजनीव ।
भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगर्त्यस्य ॥ ७ ॥

हिरण्यऽनिर्निक् । अयः । अस्य । स्थूणा । वि । भ्राजते । दिवि । अश्वाजनीऽइव ।
भद्रे । क्षेत्रे । निऽमिता । तिल्विले । वा । सनेम । मध्वः । अधिऽगर्त्यस्य ॥ ७ ॥

वेङ्कट० हिरण्यरूपा अयोमयी च अस्य रथस्य स्थूणा, वि भ्राजते च सा अन्तरिक्षे अश्वाजनी इव अवलम्बमाना भद्रे सुकल्याणे उद्गताले मरुदसस्ये 'इमे क्षेत्रे' वाशब्दः उपमार्थीयः, तिलविर्गतिकमां, अन्नमिव मधोः उदकम् रथे स्थितम् ॥ ७ ॥

मुद्गल० युवयोः रथः हिरण्यनिर्णिक् हिरण्यरूपः । अस्य रथस्य स्थूणा कीलकादयः अयः सुवर्णविकाराः । तादृशो रथः दिवि अन्तरिक्षे वि भ्राजते । किमिव । अश्वाजनी इव अश्वाः व्यापनशीलाः मेघाः, 'तान् अजति'[4] गच्छति इति अश्वाजनी विद्युत्[5] । किञ्च भद्रे कल्याणे क्षेत्रे देवयजने तिल्विले घृतसोमादिना स्निग्धे निमिता स्थूणा यूपवच्चिरमवस्थिता । मध्वः मधुपूर्णं गर्त्यस्य गर्तं रथम् सनेम संभजेम । वा अपि पूरणौ ॥ ७ ॥

हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥ ८ ॥

हिरण्यऽरूपम् । उषसः । विऽउष्टौ । अयःऽस्थूणम् । उत्ऽइता । सूर्यस्य ।
आ । रोहथः । वरुण । मित्र । गर्तम् । अतः । चक्षाथे इति । अदितिम् । दितिम् । च ॥ ८ ॥

वेङ्कट० हिरण्यरूपम् उषसि व्युष्टायाम् अयःस्थूणम् सूर्ये उदिते, प्रातरित्यर्थः, हे मित्रावरुणौ! रथम् आ रोहथः, 'अस्माद् रथात्' पश्यथः अदीनं दीनम् च जनम् ॥ ८ ॥

मुद्गल० उषसो व्युष्टौ प्रातःकाले सूर्यस्य उदिता उदये, स एव कालः प्रकारान्तरेणोक्तः । तस्मिन् काले हिरण्यरूपम् अयःस्थूणम् अयोमयशङ्कुम् गर्तम् रथं हे वरुण! हे मित्र! युवाम् आ रोहथः यज्ञं प्राप्तुम् । अतः अस्मादेशो। अदितिम् भूमिम् दितिम् खण्डितां प्रजादिकाम् च चक्षाथे पश्यथः ॥ ८ ॥

1. नास्ति मूको. 2. वा मूको. 3-3. नास्ति मूको. 4-4. तान् गच्छति मूको. 5-5. अस्माद्दृशो वि°.

यद् बंहि॑ष्ठं॒ नाति॒विधे॑ सुदानू॒ अच्छि॑द्रं॒ शर्म॑ भुवनस्य गोपा ।
तेन॑ नो मित्रावरुणावविष्टं॒ सिषा॑सन्तो जिगी॒वांसः॑ स्याम ॥ ९ ॥

यत् । बंहि॑ष्ठम् । न । अ॒ति॒ऽविधे॑ । सु॒दा॒नू॒ इति॑ सुऽदानू । अच्छि॑द्रम् । शर्म॑ । भु॒व॒न॒स्य॒ । गो॒पा॒ ।
तेन॑ । नः॒ । मि॒त्रा॒व॒रु॒णौ॒ । अ॒वि॒ष्ट॒म् । सिसा॑सन्तः । जि॒गी॒वांसः॑ । स्या॒म॒ ॥ ९ ॥

वेङ्कट० यत् अतिशयेन बहुलं विस्तृतम्, न च शत्रूणाम् अतिविधातुं शक्यं भवति हे शोभनदानौ! अच्छिद्रम् गृहम्, हे भुवनस्य गोपायितारौ! तेन अस्मान्[1] हे मित्रावरुणौ! रक्षतम्। शत्रून् सम्भक्तुमिच्छन्तो वयं तेषां जेतारः स्याम ॥ ९ ॥

इत्थं व्याख्यत् सप्तर्षिनामध्यायं माधवाह्वयः।
जगतामेकवीरस्य विषये निवसन् सुखम् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके तृतीयोऽध्यायः ॥

मुद्गल० हे सुदानू! शोभनदानौ! हे भुवनस्य गोपा! गोपौ! युवाम् बंहिष्ठम् बहुतमम् यत् अच्छिद्रम् अनवच्छिन्नम् शर्म सुखम् न अतिविधे अतिवेद्धुमशक्यम्, ईदृशं शर्म धारयथः। तेन शर्मणा नः अस्मान् अविष्टम् रक्षतम्। हे मित्रावरुणौ! सिषासन्तः धनानि सम्भक्तुम् इच्छन्तो वयम् जिगीवांसः शत्रूणां धनानि जेतुमिच्छन्तः स्याम भवेम ॥ ९ ॥

इति चतुर्थाष्टके तृतीयाध्याये एकत्रिंशो वर्गः ॥

—*—

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके तृतीयोऽध्यायः ॥



1. अस्मांसु (?) ; अस्मास वि' मूको.

## अथ चतुर्थोऽध्यायः

वेङ्कट॰ 'ऋतस्य गोपाव (पौ' अ) ध्यायं व्याचिख्यासति माधवः ।
पूरणत्वापूरणत्वे वाक्यमत्र प्रदर्शयन् ॥ १ ॥

अवान्तरेषु वाक्येषु बहुव्यावर्तते क्रिया ।
'अश्याम तं काममग्ने'[1] इत्याद्यत्र निदर्शनम् ॥ २ ॥

'येनाव तुर्वशं यदुं येन कण्वं धनस्पृतम्'[2] ।
एवंविधेऽनुषङ्गेण वाक्यार्थस्य प्रदर्शनम् ॥ ३ ॥

अनुषङ्गाय येनेति पुनरावर्तते पदम् ।
असौ न तादृशेष्वस्ति पूरणत्वमिति स्थितिः ॥ ४ ॥

'नहि ते क्षत्रं न सहः'[3] 'न जातो न जनिष्यते'[4] ।
एवम् 'अन्वह मासाः'[5] च तादृशाश्च न पूरणाः ॥ ५ ॥

'भवन्तु नः सुत्रात्रासः सुगोपाः'[6] इति दृश्यते ।
त्राणगोपनयोर्भेदात् न गोपा इति पूरणः[7] ॥ ६ ॥

'समानो वां जनिते(ता'[8] इ)ति यतश्च[9] 'भ्रातरा युवम्'[8] ।
इत्यर्थौ भ्रातरेत्येतत्तथात्र न पूरणम् ॥ ७ ॥

सूर्याश्वानामियं संज्ञा या 'भद्रा अश्वा हरितः'[10] ।
हरिनामधेया अश्वा अस्येत्यर्थं[11] प्रदर्शयेत् ॥ ८ ॥

एवंविधेषु नैकस्य प्राज्ञा इच्छन्ति निर्वचः ।
'तूर्यं श्येनेभिराशुभिः'[12] निर्ब्रूयात्तादृशानिति[13] ॥ ९ ॥

'पशुं न नष्टमिव'[14] दृश्येते नभिवौ[15] सह ।
विशेषणे विशेष्ये च पशुमिव नष्टमिव ॥ १० ॥

तत्रैकं पूरणं केचिदिच्छन्त्यन्ये तु मन्वते ।
क्वचित्स्वभावाद्[16] दृश्येते विशेषणविशेष्ययोः ॥ ११ ॥

---

१. ऋ ६,५,७ २. ऋ ८,७,१८. ३. ऋ १,२४,६. ४. ऋ १,८१,५. ५. ऋ १०,८९,१३. ६. ऋ ६,५१,११. ७. पूरणम् वि. ८. ऋ ६,५९,२. ९. तत वि. १० ऋ १,११५,३. ११. ॰र्थः वि. १२. ऋ ८,५,७ १३. निर्ब्रूयात् छपे पैङ्कक. १४. ऋ १,११६,२३. १५. नभिवौ छपे. १६ क्वचित्स्वभावात् छपे.

'अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि'[1]।
तृतीयोऽर्चन्त इत्येष[2] केषांचित् पूरणो मतः ॥ १२ ॥
ह्वानं[3] समिन्धनं चैव कुर्महेऽर्चनपूर्वकम्।
रक्षणमेति मन्त्रार्थः तत्रैकमतिरिच्यते[4] ॥ १३ ॥
'न ते वुर्तास्ति राधस इन्द्र देवो न मर्त्यः'[5]।
पादवद्य प्रथमस्यात्र प्रपञ्चस्तदनन्तरः ॥ १४ ॥
एवं पादो द्वितीयोऽत्र न पूरण इति स्थितिः।
देवशब्दद्वयं[6] पादेन मुख्येनैकेऽन्वयं विदुः ॥ १५ ॥
'दिध्येयमस्मै दित्सेयं शचीपते मनीषिणे'[7]।
दद्यामपि च दित्सेयमेवं चात्र न पूरणम् ॥ १६ ॥
'विश्वे गन्त मरुतो विश्वे'[8] 'विश्वे अद्य मरुतः'[9]।
आवर्तते विश्वशब्दः तं चेच्छति न पूरणम् ॥ १७ ॥
गमने रक्षणे चैव सर्वेषां ह्यन्वयो मतः।
व्युत्पत्त्यर्थमृचोऽस्माभिरित्थं बह्व्यः प्रदर्शिताः ॥ १८ ॥ इति।

[ ६३ ]

ऋतस्य गोपावधि तिष्ठथो रथं सत्यधर्माणा परमे व्योमनि।
यमत्र मित्रावरुणावथो युवं तस्मै वृष्टिर्मधुमत् पिन्वते दिवः ॥ १ ॥

ऋतस्य। गोपौ। अधि। तिष्ठथः। रथम्। सत्यऽधर्माणा। परमे। विऽओमनि।
यम्। अत्र। मित्रावरुणा। अवथः। युवम्। तस्मै। वृष्टिः। मधुऽमत्। पिन्वते। दिवः ॥ १ ॥

वेङ्कट० अर्चनानाः। हे सत्यस्य गोपायितारौ! अधि तिष्ठथः रथम् सत्यकर्माणौ परमे अन्तरिक्षे। यम् अस्मिन् लोके मित्रावरुणौ! रक्षथः युवम्, तस्मै वृष्टिः उदकवती दिवः पतति ॥ १ ॥

मुद्गल० 'ऋतस्य गोपौ' इति सप्तर्चं सप्तमं सूक्तम्। आत्रेयोऽर्चनाना नाम ऋषिः। जगती छन्दः। मित्रावरुणौ देवता।

हे ऋतस्य गोपौ! यज्ञस्य रक्षितारौ! सत्यधर्माणा! सत्यधर्माणौ! युवाम् रथम् अधि तिष्ठथः आरोहथोऽस्मद्यज्ञमागमनार्थम्। कुत्र। परमे व्योमनि निरतिशये आकाशे।

---

१. ऋ ५,१३,१. २. इत्येषः वेंकटम. ३. पाने वेंकट. ४. तत्रैक मति' वेंकट. ५. ऋ ८,१४,४. ६. तन वि' लुप्त. ७. ऋ ८,१४,१. ८. ऋ ५,४३,१०. ९. ऋ १०,३५,१३.

इन्द्र । प्र । नः । पुरएताऽइव । पश्य । प्र । नः । नय । प्रऽतरम् । वस्यः । अच्छ ।
भव । सुऽपारः । अतिऽपारयः । नः । भव । सुऽनीतिः । उत । वामऽनीतिः ॥ ७ ॥

स्कन्द० हे इन्द्र ! न. तादर्थ्ये चतुर्थीयम् । अस्माकमर्थाय पुरएता इव पुरोगामीव प्र पश्य निरीक्षस्व त्वम् । कम् । सामर्थ्यात् पन्थानम् । यथा राज्ञोऽन्यस्य वा कस्यचिद् अग्रगामी तस्यार्थाय गमनयोग्योऽयं न वेति पूर्वं पन्थानं निरीक्षेत तद्वदित्यर्थः । किञ्च भव त्वम् सुपारः पॄ पालनपूरणयोः । सुष्ठु पालयिता अतिपारयः शोभनश्च पूरयिता कामैः नः अस्माकम् । किञ्च भव त्वम् अस्माकम् सुनीतिः । नीतिरिति कर्तरि क्तिन् नयम् । शोभनो नेता उपायोपदेशेन प्रवर्तयिता सुनीतिः । उत-शब्दोऽप्यर्थे । वामा वननीया सम्भजनीया नीतिरुपायोपदेशो यस्य सः वामनीतिः । सम्भजनीयोपदेशोऽपि भवेत्यर्थः ॥ ७ ॥

वेङ्कट० इन्द्र ! प्र पश्य अस्मान् पुरोगन्तेव । प्र नय च अस्मान् अत्यन्तम् अभ्युदयम् प्रति । भव सुष्ठु पारयिता अस्माकम्, यस्त्वम् अतिपारयः भवसि स्तोतॄणाम् । सोपसर्गोऽपि[1] श. (तु. पा ३, १,१३८) छान्दसः । भव सुनयनः अपि वननीयनयनः[2] ॥ ७ ॥

उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।
ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता ॥ ८ ॥

उरुम् । नः । लोकम् । अनु । नेषि । विद्वान् । स्वःऽवत् । ज्योतिः । अभयम् । स्वस्ति ।
ऋष्वा । ते । इन्द्र । स्थविरस्य । बाहू इति । उप । स्थेयाम । शरणा । बृहन्ता ॥ ८ ॥

स्कन्द० उरुम् विस्तीर्णम् नः अस्मान् लोकम् स्वर्गाख्यम् इन्द्रलोकाख्यं वा अनु नेषि । अन्विति पश्चाद्भावे । नेषीत्यपि लोडर्थे लट् । पश्चान्नय । कस्य पश्चात् । सामर्थ्याद् मरणस्य । मरणोत्तरकालं विस्तीर्णं स्वर्गम् इन्द्रलोकं वाऽस्मान्नयेत्यर्थः । विद्वान् जानन् । किम् । सामर्थ्याद् युष्मद्भक्ततां सर्वं अस्माकम् । कीदृशं लोकम् । स्वर्वत् स्वत्ययेनात्र नपुंसकता । स्वर्वन्तम् । यावदभिलष्यते[3] सर्वं यत्रास्तीत्यर्थः । ज्योतिः प्रकाशरूपम् अभयम् भयवर्जितम् स्वस्ति अविनाशं विनाशवर्जितम् । तत्र च गतानाम् अस्माकम् अभयं स्वस्ति च भवतीति तद्धेतुत्वात् स एवाभयं स्वस्ति चोच्यते । अथवा स्वर्वदित्यादीनि विलिङ्गत्वात् सामानाधिकरण्येन लोकविशेषणानि । किं तर्हि । यत्र स्वर्वत् ज्योतिः । स्वस्त्यादिस्य[4] इष्यते । तेन कर्मा तद्वत् अध्याहृत्यैकवाक्यतां नेतव्यानि । यत्र स्वर्वत् ज्योतिः । ऋष्वा महन्नामैतत् (तु. निघ ३,३)। ऋष्वौ ज्योतिरभयं चाविनाशश्च तं लोकं नयेति । किञ्च ऋष्वा महान्तौ प्रभावेन ते तव बाहू हे इन्द्र ! । कीदृशस्य । स्थविरस्य स्थूलस्य[5] वृद्धस्य वा । महान्तौ प्रभावेन ते तव स्वभूतौ हे इन्द्र ! । नीता अपि स्वर्गम् कौ । बाहू । उप स्थेयाम । उपशब्दः सामीप्ये बाह्वोः समीपे तिष्ठेम । अथवा उपपूर्वस्तिष्ठतिः स्तुत्यर्थः । मरणोत्तरकालं इन्द्रलोकं वा यं सन्निकृष्टाः भवेमेत्यर्थः । जीवन्तोऽपि तव बाहू उपस्थेयाम स्तुयामेत्यध्याहारः । तव स्वर्गम् इन्द्रलोकं वा नय ।

1. °पि मूको.　2. °नः मूको.　3. °ष्यते मूको.　4-4. ज्योतिस्त्वादि° ति°.
5. नास्ति मूको.

बाहूपस्थानेन चात्र बहुत इन्द्रस्यैवोपस्थानं लक्ष्यते । कीदृशौ बाहू । शरणा शॄ हिंसायाम् । शत्रूणां हन्तारौ शरण्यौ वा बृहन्ता महान्तौ परिमाणतः । ऋष्वावित्यनेन प्रभावमहत्त्वमुच्यते । बृहन्तावित्यनेन परिमाणमहत्त्वम्[१] । एवम् अनयोरपौनरुक्त्यम् ॥ ८ ॥

वेङ्कट० उरुम् विस्तीर्णम् स्थानम् अनु नय अस्मान् जानन्[२] अभ्युदययुक्तम्[३] विनाशरहितम्[४] शोभमानम् । अभयम् च प्रापय । दर्शनीयौ तव इन्द्र ! स्थविरस्य बाहू वयम् उप स्थेयाम समाश्रिता भूत्वा हिंसकौ महान्तौ ॥ ८ ॥

वरिष्ठे न इन्द्र वन्धुरे धा वहिष्ठयोः शतावन्नश्वयोरा ।
इषमा वक्षीषां वर्षिष्ठां मा नस्तारीन्मघवन् रायो अर्यः ॥ ९ ॥

वरिष्ठे । नः । इन्द्र । वन्धुरे । धाः । वहिष्ठयोः । शतऽवन् । अश्वयोः । आ ।
इषम् । आ । वक्षि । इषाम् । वर्षिष्ठाम् । मा । नः । तारीत् । मघऽवन् । रायः । अर्यः ॥९॥

स्कन्द० वरिष्ठे उरुतमे विस्तीर्णतमे नः अस्मान् हे इन्द्र ! वन्धुरे रथस्योर्ध्वबन्धुर इत्यते । तत्र धाः 'अश्वयोरा' इत्यस्यार्धर्चस्य आकारस्य [५]अनेनाख्यातेन सह सम्बन्धः[५] । आ धाः आधेहि स्थापय । स्वर्गम् इन्द्रलोकं वा नतु विस्तीर्णतमे स्वरथस्योर्ध्वा मरणोत्तरकालम् अस्मान् स्थापयेत्यर्थः । किं केवले एव । न[६] । किं तर्हि । वहिष्ठयो वोढृतमयोश्च । कयोः । उच्यते— शतवन् ! अश्वशतेन रथशतेन धनशतेन वा युक्त ![७] अश्वयो आत्मीययोर्हर्याख्ययो. । यथा रथेऽश्वयोश्च सुस्थिता वयं गच्छामस्तथा कुर्या इत्यर्थः । किंच जीवतामप्यस्माकम् इषम् अन्नम् आ वक्षि आवह प्रापय । देहीत्यर्थः । अथवा वरिष्ठे न इन्द्र इत्यत्र नः इति तादर्थ्ये चतुर्थी । अस्माकमर्थाय स्वरथस्योर्ध्वावश्वयोश्च स्थापय । किम् । सामर्थ्याद् इषम् । अस्मभ्यम् दातुं रथेऽश्वयोश्चेषम् आरोपयेत्यर्थः । आरोप्य चावह आनयैनाम् इषमिति । कीदृशीम् । इषाम् वर्षिष्ठाम् इति । निर्धारणे षष्ठी । अन्नानां मनुष्यसम्बन्धिनां मध्ये वृद्धतमां प्रभूततमाम् । मा च नः अस्मान् तारीत् तारीः हिंसीः त्वं हे मघवन् ! धनवन् ! । मा चास्मानेव केवलान् । किं तर्हि । रायः धनानि चास्माकम् । अथवा मा अस्तारीदिति नः इत्येव । षष्ठ्येव धनविशेषणार्था । माऽस्माकम् धनानि हिंसीरिति । यः कीदृशः । अर्यः ईश्वरो भवत्वमिति ॥ ९ ॥

वेङ्कट० उरुतमे इन्द्र ! अस्मान् रथस्य फलकसङ्घाटे धारय । तथा वोढृतमयोः अश्वयोः च । शतधन ! शतअश्व ! वा अन्नम् आ वह 'अन्नानाम् वर्षिष्ठम्[८] । मा अस्माकम् हिंसीः मघवन् ! धनानि[९] स्वामी ॥ ९ ॥

इन्द्र मृळ मह्यं जीवातुमिच्छ चोदय धियमयसो न धाराम् ।
यत् किं चाहं त्वायुरिदं वदामि तज्जुषस्व कृधि मा देववन्तम् ॥ १० ॥

१. °भागवान् मूको. २. ज° मूको. ३. °क मूको. ४. °त मूको. ५-५. °नाख्या सम्बन्धः (°रु: लि° ) मूको. ६. न ··· लि°. ७. नास्ति मूको. ८-८. °वर्षीयम् वि° ख, अन्नानामपि स्पर्धे. ९. धना° मूको.

त्रातारम् इन्द्रम् आह्वयामि तर्पयितारम् इन्द्रम् आह्वयामि । इत्येवम् उत्तरयोरपि । पुरुहूतश्च सन् स्वस्ति अविनाशम् नः अस्माकम् मघवा धनवान् धातु दधातु विधत्ताम् । अथवा नः इति चतुर्थी . दधातिरपि दानार्थः । अस्मभ्यम् अविनाशं ददातु । कः । इन्द्रः ॥ ११ ॥

वेङ्कट० निगदसिद्धा ॥ ११ ॥

इन्द्र॑ः सु॒त्रामा॒ स्ववाँ॒ अवो॑भिः सुमृळी॒को भ॑वतु वि॒श्ववे॑दाः ।
बाध॑तां॒ द्वेषो॒ अभ॑यं कृणोतु सु॒वीर्य॑स्य॒ पत॑यः स्याम ॥ १२ ॥

इन्द्र॑ः । सु॒ऽत्रामा॑ । स्वऽवा॑न् । अव॑ःऽभिः । सु॒ऽमृ॒ळी॒कः । भ॒व॒तु॒ । वि॒श्वऽवे॑दाः ।
बाध॑ताम् । द्वेष॑ः । अभ॑यम् । कृ॒णो॒तु॒ । सु॒ऽवीर्य॑स्य । पत॑यः । स्या॒म॒ ॥ १२ ॥

स्कन्द० इन्द्रः सुत्रामा शोभनः त्राता स्ववान् 'स्वशब्दोऽयम् धनवचनः' आत्मवचनोऽश्ववचनो' वा । धनवान् आत्मवान् अश्ववान् वेत्यर्थः' । अवोभिः इत्थम्भूतलक्षणे एषा तृतीया । तर्पणैः पालनैर्वा सम्बद्धः सुमृळीकः सुसुखः भवतु विश्ववेदाः सर्वधनः सर्वज्ञो वा । किञ्च बाधताम् अपनयतु पीडयतु वा द्वेषः अस्माकं द्वेष्टृ द्वेष्यं वा पापं वा रक्षआदि वा । अभयम् च कृणोतु करोतु अस्माकम् । तत्प्रसादाच्च सुवीर्यस्य शोभनवीर्ययुक्तस्य पुत्रस्य धनस्य वा पतयः स्वामिनः स्याम भवेम ॥ १२ ॥

वेङ्कट० निगदसिद्धा ॥ १२ ॥

तस्य॑ व॒यं सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म ।
स सु॒त्रामा॒ स्ववाँ॒ इन्द्रो॑ अ॒स्मे आ॒राच्चि॒द् द्वेष॑ः सनु॒तर्यु॑योतु ॥ १३ ॥

तस्य॑ । व॒यम् । सु॒ऽम॒तौ । य॒ज्ञिय॑स्य । अपि॑ । भ॒द्रे । सौ॒म॒न॒से । स्या॒म॒ ।
सः । सु॒ऽत्रामा॑ । स्वऽवा॑न् । इन्द्र॑ः । अ॒स्मे इति॑ । आ॒रात् । चि॒त् । द्वेष॑ः । स॒नु॒तः । यु॒यो॒तु॒ ॥ १३ ॥

स्कन्द० तस्य प्रकृतस्येन्द्रस्य वयम् सुमतौ शोभनायां मतौ पालनबुद्धौ यज्ञियस्य यज्ञार्हस्य । किम् । स्याम इति यत् परस्तात् क्रियापदं तस्यानुषङ्गः । न च केवलायां सुमतौ । किं तर्हि । अपि भद्रे भजनीये सौमनसे शोभने 'मनः सुमनः सुमन एव सौमनसम्' । किं तत् । दानबुद्धिः । तत्रापि वयमेव स्याम । पालनबुद्धिषु वयं पाल्याः दानबुद्धिषु च सम्प्रदानं स्यामेत्यर्थः । सः सुत्रामा शोभनः त्राता स्ववान् धनवान् आत्मवान् वा इन्द्रः अस्मे 'पञ्चम्या अर्थे' से । अस्मत्तः आरात् चित् आराच्छब्दो दूरवचनः । चिच्छब्दोऽप्यर्थे । दूरेऽपि । अपिशब्दात् सन्निकृष्टेऽपि यद् द्वेषः द्वेष्टृ द्वेष्यं वा पापं रक्षआदि वा सनुतः अन्तर्हितम् ( तु. निघ ३,२५ ), तत् युयोतु पृथक्करोतु । अपनयत्वित्यर्थः ॥ १३ ॥

वेङ्कट० निगदसिद्धा ॥ १३ ॥

---

१-१. "ब्दो धन" मूको. २. आत्मवचनो मूको. ३. त्वर्थः मूको. ४-४. 'सुमन सुमन सौमनसः मूको. ५-५. सप्तम्यर्थ मूको.

अव त्वे इन्द्र प्रवतो नोर्मिर्गिरो ब्रह्माणि नियुतो धवन्ते ।
उरू न राधः सवना पुरूण्यपो गा वज्रिन् युवसे समिन्दून् ॥ १४ ॥

अव । त्वे इति । इन्द्र । प्रऽवतः । न । ऊर्मिः । गिरः । ब्रह्माणि । निऽयुतः । धवन्ते ।
उरु । न । राधः । सवना । पुरूणि । अपः । गाः । वज्रिन् । युवसे । सम् । इन्दून् ॥ १४ ॥

स्कन्द० अव इत्युपसर्गो धवन्ते इत्याख्यातेन सम्बन्धयितव्यः । त्वे तव त्वामुत हे इन्द्र! प्रवतः न ऊर्मिः प्रवत इति 'उपसर्गाच्छन्दसि धात्वर्थे' (पा ५,१,११८) इति वतिः । प्रवतं गन्तुं प्रवृत्तम् । किं तत् । उदकम् । तस्य यथोर्मिरोघः अधो गच्छेद् अध्याहृतम् एवम् गिरः ब्रह्माणि गिरो वाचः ब्रह्माणि अन्नानि कर्मप्रवचनीययोगलक्षणा चैषा द्वितीया । तच्छ्रुतेस्सामर्थ्यादेव प्रति चात्र कर्मप्रवचनीयप्रतिशब्दाऽध्याहारः[1] । स्तुतिलक्षणा वाचो हविर्लक्षणान्यन्नानि च प्रति नियुतः वडवाः अव धवन्ते । अवेत्ययम् अधोभावे । धवतिरपि गतिकर्मा 'धवति' धावति' (निघ २,१४) इति । अधो गच्छन्ति[1] । द्युलोकात् पृथिवीं गच्छन्तीत्यर्थः । अथवा त्वे नियुतः इत्यपि द्वे अपि द्वितीयान्ते । गिरो ब्रह्माणि इत्येते तु प्रथमान्ते धवन्ते इत्येतत्था। क्रियायाः कर्तृप्रतिनिर्देशार्थे । त्वाम् इन्द्रं त्वदीयाश्च वडवाः च प्रति स्तुतिलक्षणा वाचोऽस्माभिः प्रयुज्यमाना हविर्लक्षणान्यन्नानि च[1] अव धवन्ते गच्छन्ति । अवशब्दस्तु पदपूरणः । उच्छब्दार्थे[2] वा । ऊर्ध्वं द्युलोकं गच्छन्तीति । अथवा अव-शब्द एवोपसर्गः क्रियावचनशब्दार्थयोगाद् समाधना[3] क्रियाम् आह । कतमाम् । अवस्थितानाम् । अधः पृथिव्यां स्थितानाम् अस्माकं स्तुभूतानि गिरो ब्रह्माणि चेति । किञ्च उरु "न राधः"[4] नशब्द उपरिष्टादुपचारः । 'उपमार्थीयत्वात् 'अस्तु-पमानार्थस्य[5] सम्प्रत्यये प्रयोगः' (या ७,३१) इति पदपूरणः । चार्थे वा । बहु अयुधनम् सवना पुरूणि । 'सवनम्' (निघ ३,११) इति यज्ञनाम्[6] । हविर्यज्ञांश्च बहून् अपः उदकानि च मेघोदरान्तर्गतानि च गाः च असुरैरपहृताः । हे वज्रिन्! युवसे सम्[7] संयुवसे आत्मना सम्मिश्रयसि । आत्मसंस्थानि आत्मायत्तानि करोषीत्यर्थः । न चैतान्येव केवलानि । किं तर्हि । इन्दून् सोमांश्च । अथवा उरू न राधः इति नशब्द उपमार्थमेव । यथा कश्चिद् बहुधनं महता यत्नेन कुर्यात् तद्वत् त्वं हविर्यज्ञादीनि स्वीकरोषीति ॥ १४ ॥

वेङ्कट० अव धवन्ते पतन्ति त्वयि इन्द्र! प्रवणाद् इव उदकम् स्तोत्राण्यन्नानि नियुतः इव शीघ्र-वेगाः । बहु च धनम् सवनानि[8] च बहूनि धवन्ते । स त्वं यजमानैः अभिषूयमाणान्[11] इन्दून् उदकानि गाः च सम्मिश्रयसि । यजमानेभ्य इत्यर्थः ॥ १४ ॥

क ईं स्तवत् कः पृणात् को यजाते यदुग्रमिन्मघवा विश्वहावेत् ।
पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ॥ १५ ॥

---

१. "शब्दोऽध्या" मूको. २. धवते मूको. ३. गच्छन्ति मूको. ४. नास्ति मूको. ५. स्व[illegible]" मूको. ६. साधना मूको. ७-७. नास्ति मूको. ६-८. 'रा धुन' मूको. ९. न ... मूको. १०. संगतना" मूको.
११. "माणान् वि" ल, "माणाद् सर्व.

कः । ईम् । स्तवत् । कः । पृणात् । कः । यजाते । यत् । उग्रम् । इत् । मघऽवा । विश्वहा । अवैत् ।
पादौऽइव । प्रऽहरन् । अन्यम्ऽअन्यम् । कृणोति । पूर्वम् । अपरम् । शचीभिः ॥ १५ ॥

स्कन्द० किंशब्द आक्षेपे । ईम् शब्द एनमित्यस्यार्थे । कः पुनम् इन्द्रम् स्तवत् मत्तोऽन्यः स्तौति । यथाऽहं स्तौमि न तथाऽन्यः कश्चिदित्यर्थः । कः पृणात् पृ पालनपूरणयोः । को वा पूरयति सोमैः । कः वा यजाते पूजयति हविर्यज्ञैर्वा यजते । यः कीदृशः इन्द्रः । उच्यते—यत् यः इन्द्रः उग्रम् क्रूरमपि शत्रुम् मघवा धनवान् विश्वहा सर्वदा अवैत् वेतिर्गतिकर्मा । हननार्थं गच्छति । गत्वा च पादौ इव प्रहरन् यथा गमनशीलौ पादौ गमनवेलायां प्रक्षिपन् पूर्वम् अपरम् करोत्येवम् अन्यमन्यं च शत्रुं यावान् कश्चित् शत्रुस्तं सर्वं करोति पूर्वमपरं प्रकर्षापकर्षावत्र पूर्वापरशब्दाभ्याम् अभिधातुम् अभिप्रेतौ, 'न तु पौर्वापर्यम्'। उत्कृष्टं सन्तं निकृष्टमित्यर्थः । शचीभिः कर्मभिः प्रज्ञाभिर्वा । निकृष्टकर्माणं निकृष्टप्रज्ञं वा करोतीत्यर्थः ॥ १५ ॥

वेङ्कट० कः एनम् स्तोतुं शक्नुयात् । कः वाऽस्मै प्रयच्छति । कः वा यजते । यत् अयम् उद्गूर्णे लोके कश्चिदपि विद्यमानं शत्रुम् सर्वदा शीघ्रम् वेत्ति । यं च पादौ इव गमनवेलायां प्रहरन् अन्यमन्यम् करोति । पूर्वम् पातम् अपरम् अपरं च पूर्वम् करोति । कर्मभिः भूयोभूयः आश्चर्याणि कर्माणि करोति । तस्मात् स्तोतुम् अयं शक्य इति ॥ १५ ॥

[1]इति चतुर्थाष्टके सप्तमाध्याये द्वात्रिंशो वर्गः ॥

शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥ १६ ॥

शृण्वे । वीरः । उग्रम्ऽउग्रम् । दमऽयन् । अन्यम्ऽअन्यम् । अतिऽनेनीयमानः ।
एधमानऽद्विट् । उभयस्य । राजा । चोष्कूयते । विशः । इन्द्रः । मनुष्यान् ॥ १६ ॥

स्कन्द० शृण्वे इति लडर्थे लिट् । विकरणश्च श्नुः व्यत्ययेन कर्मणि च श्रूयते । प्रख्यात इत्यर्थः । वीरः शूर इन्द्रः । किं [3]कुर्वन् । उग्रमुग्रम् दमायन्[3] यावान् कश्चिदुग्रः क्रूरः शत्रुः तं सर्वं दमयन् दान्तम् कुर्वन्निच्छन् वा । न च केवलमेतदेव कुर्वन् । किं तर्हि । अन्यमन्यम् अन्यश्चान्यश्चात्मनः स्तोतारम् अतिनेनीयमानः अतिशब्दः पूजायाम् । शोभनं नयन् । किम् । सामर्थ्यात् समृद्धिम् । स्तोतारमात्मनः समृद्धं कुर्वन्नित्यर्थः । एतदुक्तं भवति—शत्रुदमनकरणमात्मनः शत्रुदमनेच्छायतो वा । सर्वस्तोतृसमृद्धिकरणपदयोः अध्याहृतेन्द्रस्य प्रख्यातत्वमिति । किञ्च एधमानद्विट् अभ्यस्तां द्वेष्टा । किम् सर्वेषाम् । न, किंतु[4] अयज्वनाम् । कुत एतत् । सामर्थ्यात् । उभयस्य दिव्यस्य पार्थिवस्य च धनस्य राजा ईश्वरः चोष्कूयते शत्रुदमनार्थेऽत्र एकुणातिरिति व्याचक्षते । मायया शत्रुरपि निराकरोति । कीदृशान् । विशः विश[5] प्रवेशने । सर्वत्राऽप्यनुप्रविष्टान् । कः । इन्द्रः । कान् । मनुष्यान् । एधमानद्विडित्युपादानाद् यान् द्वेष्टि तान् सप्रदान् अयज्वनः[6] ॥ १६ ॥

---

१-१. नदे पौर्वा० वि[1], नदे त्तपौर्वा° वि[2]. २-२. नास्ति मूको. ३. कुर्वं ··· दमन्° ( दमयन्द° वि[1] ) मूको. ४. कि मूको. ५. नास्ति मूको. ६. सम्वानः मूको.

रूपम्ऽरूपम् । प्रतिऽरूपः । बभूव । तत् । अस्य । रूपम् । प्रतिऽचक्षणाय ।
इन्द्रः । मायाभिः । पुरुऽरूपः । ईयते । युक्ताः । हि । अस्य । हरयः । शता । दश ॥ १८ ॥

स्कन्द० रूपम्-रूपम् इति षष्ठ्यर्थे द्वितीया । रूपस्यरूपस्य । प्रतिरूपः प्रतिरूपशब्द[1] सदृशवचनः । सदृशः[2] बभूव भवति । अथवा भवति. प्राप्त्यर्थः । रूपंरूपं प्राप्नोति । प्रतिरूपः प्रतिगतो रूपैः इन्द्रः । देवतैश्वर्याद् आपद्य रूपम् इन्द्र आविष्करोतीत्यर्थः । तत् अस्य रूपम् प्रतिचक्षणाय सर्वस्य प्रतिदर्शनाय । सर्वेण द्रष्टव्यमित्यर्थः । किञ्च इन्द्रः मायाभिः प्रज्ञाभिः पुरुरूपः बहुरूपः ईयते गच्छति यज्ञान् शत्रून् वा प्रति । कस्मात् । युक्ताः हि । हि-शब्दो यस्मादर्थे । यस्माद् रथे युक्ता अस्य स्वभूताः हरयः अश्वाः । कियन्तः । शता दश दश शतानि । सहस्रमित्यर्थः । यस्य हि अश्वसहस्रं रथेन युक्तं स कस्मात् न गच्छति ॥ १८ ॥

वेङ्कट० तत्तद्रूपम् इन्द्रः भावयति[3] । प्रतिरूपम् प्रतिपत्तमानं यो रूपम् आदत्ते स तथोक्तः । तत् अस्य रूपम् प्रतिदर्शनाय भवति । तदेवाह—इन्द्रः कर्मभिः बहुरूपः गच्छतीति[4] तदनुरूपम् । अस्य अश्वाः दश शतानि सहस्रम्[5] युक्ताः भवन्तीति । ततः सर्वं एव मन्यन्ते—मां प्रति उदगादित्यनेनैतत् समानमिति ॥ १८ ॥

युजानो हरिता रथे भूरि त्वष्टेह राजति ।
को विश्वाहा द्विषतः पक्ष आसत उतासीनेषु सूरिषु ॥ १९ ॥

युजानः । हरिता । रथे । भूरि । त्वष्टा । इह । राजति ।
कः । विश्वाहा । द्विषतः । पक्षः । आसते । उत । आसीनेषु । सूरिषु ॥ १९ ॥

स्कन्द० युजानः नियुञ्जानः हरिता हरितवर्णावश्वौ आत्मीये रथे भूरि प्रभूतम् त्वष्टा तक्षू त्वक्षू तनूकरणे । शत्रूणां तनूकर्ता इन्द्रः इह लोके राजति दीप्यते । सुष्ठु शोभत इत्यर्थः । अथवा युजान इति हेतौ शानच् । भूरीत्यपि षष्ठ्यर्थे प्रथमा । राजतिरत्रैश्वर्यकर्मा । हरित-वर्णयोः अश्वयोः रथे नियोगेन हेतुना बहुनो धनस्येष्टे । अश्वयोगेन तत्पूर्वकः सङ्ग्रामो[6] लक्ष्यते । अश्वनियोगोत्तरकालेन सङ्ग्रामेण हेतुनेत्यर्थः । कः विश्वाहा किंशब्दोऽत्र क्षेपे विश्वाहा सर्वदा द्विषतः इन्द्रः पक्षः सहायसमूहः[7] आसते आस्ते । न कश्चिदप्यास्ते । सर्वमिन्द्रो विनाशयतीत्यर्थः । उत आसीनेषु उतशब्दोऽप्यर्थे । आसीनेषु तिष्ठत्सु विद्यमानेषु सूरिषु स्तोतृष्वस्मासु अपि[8] । एतदुक्तं भवति—स्वयमेव तावद् इन्द्रोऽपि द्विषत्पक्षविनाशनक्षमः, किं पुनः अस्मासु सत्सु स्तोतृषु । तथैनं स्तुमो यथा प्रवृद्धवीर्यः सर्वं द्विषत्पक्षं विनाशयतीति ॥ १९ ॥

वेङ्कट० युञ्जानः हरितावश्वौ रथे अत्यन्तम् दीप्तः इह राजति । कः इन्द्रव्यतिरिक्तः शत्रोः पक्षे सर्वदा शत्रुमध्ये आस्ते, अपि च आसीनेषु स्तोतृषु ॥ १९ ॥

अगव्यूति क्षेत्रमागन्म देवा उर्वी सती भूमिरंहूरणाऽभूत् ।
बृहस्पते प्र चिकित्सा गविष्टावित्था सते जरित्र इन्द्र पन्थाम् ॥ २० ॥

---

१. प्रतिशब्दः मूको. २. सदृशो मूको. ३. भावयति रूपं. ४. गच्छति वि° रूपं, ५. °स्र मूको. ६. सङ्ग्रामो मूको. ७. सहायसमाह वि°. ८. नास्ति मूको.

दश । अश्वान् । दश । कोशान् । दश । वस्त्रा । अधिऽभोजना ।
दशो इति । हिरण्यऽपिण्डान् । दिवःऽदासात् । असानिषम् ॥ २३ ॥

स्कन्द० दश अश्वान् दश कोशान् 'दश कल्याणान्' दश वस्त्रा वस्त्राणि अधिभोजना अधि[1] उपरि भोजनं येषां तानि अधिभोजनानि । समनन्तरभोजनसहितानीत्यर्थः । दश उ उशब्द एवार्थे । दशैव हिरण्यपिण्डान् सुवर्णपिण्डान् दिवोदासात् असानिषम् सम्भाजयाम् लब्धवान् अहम् । अत्रापि पूर्ववदेव भरद्वाजकर्तृकस्य लाभस्य आत्मनि व्यपदेशः ॥ २३ ॥

वेङ्कट० उपरि भोजनं च येषां भवति तान्यधिभोजनानि इति[2] ॥ २३ ॥

दश रथान् प्रष्टिमतः शतं गा अथर्वभ्यः । अश्वथः पायवेऽदात् ॥ २४ ॥
दश । रथान् । प्रष्टिऽमतः । शतम् । गाः । अथर्वऽभ्यः । अश्वथः । पायवे । अदात् ॥ २४ ॥

स्कन्द० दश रथान् । कीदृशान् । प्रष्टिमतः[4] । एकस्यामेव धुरि यो द्वितीयः पार्श्वे युज्यते स प्रष्टिरुच्यते, तद्वतः । धुरि-धुरि द्वाभ्यां युक्तान् । चतुर्भिरश्वैर्युक्तानित्यर्थः[5] । शतम् गाः अथर्वभ्यः आथर्वणकर्मकारिभ्यः[6] । पुरोहितेभ्योऽस्मभ्यमित्यर्थः । अथवा[7] 'थर्वतिश्चरतिकर्मा' (या ११,१८) । तत्प्रतिषेधेन इदमभिधानम् । अचरेभ्यः अचलेभ्यः । स्थिरभावेभ्योऽस्मभ्यमित्यर्थः । अश्वथः अश्वैः थर्वति चरति गच्छति यः सोऽश्वथः दिवोदासः । पायवे पायुनाम्ने[8] भरद्वाजपुत्रायैव अदात् दत्तवान् । इयमपि भरद्वाजदानमेव आत्मनि पायौ चोच्यते ॥ २४ ॥

वेङ्कट० दश रथान् प्रष्टिभिर्युक्तान् शतम्[9] च गाः अथर्वकुलजातेभ्यः[10], अश्वथः[11] इति अस्य संज्ञा, पाय्वर्थम्[12] आयच्छत् ॥ २४ ॥

महि राधो विश्वजन्यं दधानान् भरद्वाजान्त्सार्ञ्जयो अभ्ययष्ट ॥ २५ ॥
महि । राधः । विश्वऽजन्यम् । दधानान् । भरत्ऽवाजान् । सार्ञ्जयः । अभि । अयष्ट ॥ २५ ॥

स्कन्द० महि राधः [13]'महि महत्'[13] राधो धनम् विश्वजन्यम् सर्वस्मिन् जने साधु भवं वा [14]'प्रख्यातत्वेन दधानान् दत्तं धनं धारयतः'[14] भरद्वाजान् सर्वानेव अस्मान् सार्ञ्जयः सृञ्जयपुत्रः प्रस्तोकः अभि अयष्ट यजिरत्र पूजामात्रवचनः । अभिपूजितवान् । दत्त्वा धनं गृहीतधनान् [15]सतः उत्तरकालमपि[15] मानसत्कारैः अभिपूजितवानित्यर्थः ॥ २५ ॥

वेङ्कट० महद् धनम् सर्वपुरुषपौत्रजनहितमेतत् दधानान् अस्मान् भरद्वाजान् सृञ्जयपुत्रः[16] [17]अभि अपूजयत्[17] इत्यर्थमिति ॥ २५ ॥

[18]इति चतुर्थाष्टके सप्तमाध्याये चतुस्त्रिंशो वर्गः[18] ॥

---

१-१. कल्याणान् मूको. २. नास्ति मूको. ३. नास्ति वि' लपं. ४. प्रष्टिमतः वि'". ५. चतुर्भिश्चतुरश्वैः मूको. ६. अथर्वण मूको. ७. अथवा त्रि'. ८. पायुनाम्ने कु. ९. जातम् मूको. १०. अथर्वकुला° मूको. ११. अश्वथः वि' कु; अश्वथ लपं. १२. पायनार्थम् वि' कु; पायनार्थं लपं. १३-१३. महिमत् । वि" कु. १४-१४. °तत्वेन वर्त राधारयन्तो वि'. १५-१५. सतोत्तर° मूको. १६. सृञ्ज° कु लपं. १७-१७. अपू° मूको. १८-१८. नास्ति मूको.

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥ २६ ॥

वनस्पते । वीळुऽअङ्गः । हि । भूयाः । अस्मत्ऽसखा । प्रऽतरणः । सुऽवीरः ।
गोभिः । सम्ऽनद्धः । असि । वीळयस्व । आऽस्थाता । ते । जयतु । जेत्वानि ॥ २६ ॥

स्कन्द० "वनस्पतिदैवत्यस्तृचः परः[1] वनस्पतेप्रभृति" । रथदेवत्योऽयं परस्तृचो[2] 'वनस्पते' इत्येतस्मात्प्रभृति । पूर्वदादिरित्यर्थः । वनस्पतिशब्दोऽयम् 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति' ( या २,५ ) इत्येवं वनस्पतिविकारे प्रयुक्तः । हे वनस्पते ! वनस्पतिविकार ! रथ ! वीड्वङ्गः हि वीळूनि संस्तब्धानि दृढानि अङ्गान्यवयवा यस्य स वीड्वङ्गः । हि-शब्दस्तु पदपूरणः एवार्थे वा । एवादृशावयव एव भूयाः 'भव त्वम् अस्मत्सखा' अस्माकं सखिस्थानीयः । सखित्वेन वा । यथा सखा सख्युर्व्यसनेष्वहाता[3] तथा त्वम् अस्माकम् चात्र तद्वत् व्यसनेषु अहाने लक्ष्यते । यथा सखा सख्युर्व्यसनेष्वहाता[3] तथा त्वम् अस्माकम् अहाता[4] भवेत्यर्थः । प्रतरणः प्रतीर्यते येन सङ्ग्रामः स प्रतरणः । सङ्ग्रामनिर्वहणे समर्थ इत्यर्थः । सुवीरः शोभनवीरयुक्तः । यत्ते वीरो योद्धा स शोभनः अभीरुरस्त्वित्यर्थः । कस्मात् । उच्यते — गोभिः सन्नद्धः असि गोशब्देनाऽत्र[5] तद्विकारश्चर्माणि श्लेष्मा चोच्यन्ते ( द्र. या २,५ ) । एकवाक्यताप्रसिद्ध्यर्थं च यत्तच्छब्दावध्याहार्यौ[6] । यस्माद्गोविकारैश्चर्मभिः श्लेष्मणा च सन्नद्धः सम्यक् बद्धोऽसि तस्मात् कृतदार्ढ्यास्त्युपायत्वात् वीळयस्व वीळयतिः संस्तम्भकर्मा । णह बन्धने । संस्तम्भय दृढीकुरु आत्मानम् । दृढीकृत्य पश्चात् आस्मार्भ त्वयि आस्थाता आरोढा ते तव जयतु जेत्वानि इत्यर्थे अयं त्व-प्रत्ययः । 'जेतव्यानि शत्रुसैन्यानि'[7] शत्रुधनानि वा ॥ २६ ॥

वेङ्कट० परौ तृचौ रथदुन्दुभिदैवत्यौ[8], ऐन्द्रोऽन्त्योऽर्धर्चः[9] । वनस्पते ! दृढाङ्गो भव अस्मत्सखा प्रतरणः शोभनवीरयुक्तः । गोविकारैः चर्मभिः सनद्धः असि । त्वत्को भव दृढाङ्ग । आस्थाता ते जयतु जेतव्यानि ॥ २६ ॥

दिवस्पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज ॥ २७ ॥

दिवः । पृथिव्याः । परि । ओजः । उत्ऽभृतम् । वनस्पतिऽभ्यः । परि । आऽभृतम् । सहः ।
अपाम् । ओज्मानम् । परि । गोभिः । आऽवृतम् । इन्द्रस्य । वज्रम् । हविषा । रथम् । यज ॥ २७ ॥

स्कन्द० दिवः च पृथिव्याः च ओजः बलं सारं परि उद्भृतम् सर्वत उद्धृतम् । समुच्चित्यमुच्चित्य कार्यात्मना व्यवतिष्ठते । पिण्डीकृतम् रथात्मना व्यवस्थापितम् । कारणस्य हि सारः

---

[1-1]. वनस्पतिदैवत्यस्तृचः परः मूको. [2]. रथः परस्तृच मूको. [3-3]. अव्यसनम् मूको. [4]. °तेषा इता कु. [5]. आहता कु. [6]. गोशब्देन मूको. [7]. सम्मान्छब्दा° मूको. [8-8]. जेतव्यानि ...... जानि एत्° मूको. [9]. °दुन्दुभिदेवत्यौ वि° अ° °दुन्दुभिदेवत्यौ छर्प. [10]. ऐन्द्रोऽन्त्यो° मूको.

सामर्थ्यात् कान्तिवचनः। कान्तिमत् शोभनम् दुन्दुभिः वावदीति पुनःपुनः वदति। सर्वदा दुन्दुभिः शोभनं शब्दं करोतीत्यर्थः। 'समश्वपर्णास्तदृचोऽर्धमैन्द्रम्। समश्वपर्णाः'[1] इत्येवमादि पञ्चम्या ऋचोऽर्धं तदैन्द्रम्। देवताभेदाच्च भिन्नमेवेदं[2] पूर्वस्माद् वाक्यात्। समित्यस्य चरन्तीत्येतेन सम्बन्धः। चरन्तीति च लोडर्थे लट्। सम् चरन्ति सञ्चरन्तु। शत्रून् [3]घ्नन्तः अप्रति-बध्यमानाः[3] [4]संग्रामे सञ्चरन्त्वित्यर्थः[4]। अश्वपर्णाः अश्वपतनाः अश्वगामिनः[5]। अश्ववारा इत्यर्थः। नः अस्माकम् स्वभूताः नरः मनुष्याः। न च केवला 'अश्ववारा एव'। किं तर्हि। हे इन्द्र! अस्माकम् स्वभूताः रथिनः [6]अपि जयन्तु[6] संग्रामे ॥ ३१ ॥

इति भट्टेश्वरसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये [7]एकत्रिंशोऽध्यायः ॥

वेङ्कट० अस्मदीयाः सेनाः आ अज शत्रून् प्रति नय, प्रत्यावर्तय च इमाः शत्रुसेनाः। अथ परोक्षः[8]। प्रज्ञानयुक्तम् दुन्दुभिः अत्यन्तं शब्दं करोति। सम् चरन्ति अस्मदीयाः योद्धारः अश्वपतनाः। अस्माकम् इन्द्र! रथिनः शत्रून् जयन्तु ॥ ३१ ॥

[9]इति चतुर्थाष्टके सप्तमाध्याये पञ्चत्रिंशो वर्गः[9] ॥

इत्थं व्याख्यदेकत्रिंशमध्यायं माधवाह्वयः।
चोलेषु निवसन् ग्रामे गोमत्यार्यैः समादृतः[10] ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके सप्तमोऽध्यायः ॥

— * —

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके सप्तमोऽध्यायः ॥



१. न समस्तं मूको. २. °मेव वेदं छ स्पो. ३-३. घ्नन्तः अप्रतिबध्यमानाः मूको. ४-४. संग्रामेषु चरन्तीत्यर्थः मूको. ५. अश्वगमना वि°. ६-६. जयन्तु एव मूको. ७-७. त्रिंशत्तमः मूको. ८. परोक्षः वि° ९-९. नास्ति मूको. १०. समादृतः मूको; समादृतः इत्यर्थः; चतुर्थाष्टके; अथ सप्तमः ... अध्यायः, ... अध्यायः.

मम् । यज्ञे महारमित्यर्थः[१] । शतम् हिमाः शतं वर्षाणि । न केवलं समेद्धारमेव । किं तर्हि । स्तोतृभ्यः मत्प्रभृतिभ्यः ये च ददति धनानि[२] राज्ञानोऽन्ये था[३] तांश्च ॥ ८ ॥[४]

वेङ्कट० त्वम् अग्ने! सर्वासाम् मानुषीणाम् विशाम् गृहपतिः असि । स त्वम् शतसङ्ख्याभिः पुरीभिः युवतम! पाहि रक्ष आहन्तुः समेद्धारम्[४] शतम् हिमाः । स्तोतृभ्यः ये च ददति तांश्च पाहीति[५] ॥ ८ ॥

त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ ९ ॥

त्वम् । नः । चित्रः । ऊत्या । वसो इति । राधांसि । चोदय ।
अस्य । रायः । त्वम् । अग्ने । रथीः । असि । विदाः । गाधम् । तुचे । तु । नः ॥ ९ ॥

स्कन्द० त्वत्तः प्रत्यक्षकृतोऽयं मन्त्रः । चित्र इत्येतद् नाऽऽमन्त्रितम्[६] । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता । 'यः त्वम् चित्रः विचित्रः सः नः'[६] कर्मप्रवचनीययोगलक्षणैषा द्वितीया । तच्छुतेश्च कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः[७] । अस्मान् प्रति पालनेन सह वसो! प्रशस्त! [१०]धनवन्! वा[१०] राधांसि धनानि चोदय प्रेरय । पालय अस्मान्, धनानि च देहीत्यर्थः । किं कारणम् । उच्यते । अस्य रायः[११] यदिदं पृथिव्यां धनम् अस्य सर्वस्य त्वम् हे अग्ने! रथीः[१२] सारथिवचनोऽयं प्रेरणासामान्याद् इह प्रयुक्तः । प्रेरयितासि । दाताऽसीत्यर्थः । किञ्च विदाः वेत्थ जानीहि । ज्ञानेन चात्र प्रदानमेव लक्ष्यते । देहीत्यर्थः । किम् । गाधम् गाधशब्दोऽयम् अगाधमुदकमित्येवमादिषु उदकमध्ये या भूः पादाश्रिता प्रतिपद्यते तस्या वाचकः । इह तु स्थानसामान्याद् आश्रयस्थाने प्रयुक्तः । आश्रयस्थानम् । कस्मै । तुचे 'तुक्'[१३] ( निघ २,२ ) इत्यपत्यनाम । अपत्याय । तु इति पदपूरणः । नः अस्माकम् ॥ ९ ॥

वेङ्कट० त्वम् अस्मभ्यम् चित्रः[१४] रक्षणार्थं चायनीयः![१५] धनानि चोदय । अस्य दृश्यमानस्य धनस्य त्वम् अग्ने! नेता भवसि । लम्भय च त्वम् प्रतिष्ठाम् अपत्यार्थम् अस्माकम् शीघ्रम् । ९ ॥

पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेळांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥ १० ॥

पर्षि । तोकम् । तनयम् । पर्तृऽभिः । त्वम् । अदब्धैः । अप्रयुत्वऽभिः ।
अग्ने । हेळांसि । दैव्या । युयोधि । नः । अदेवानि । ह्वरांसि । च ॥ १० ॥

१. यज्ञायष्टारम् मूको. २. धनानि मूको. ३. नास्ति मूको. ४. मूको. यविष्ठ्यादिः ग्रन्थः २१ ग्रमगम्यान्ते दृष्ट:. ५. °मेधा° छ कर्प. ६. पासी° छ कर्प. ७. 'मन्त्रितः मूको. ८-८. यश्चित्र विचित्रस्त्वम् मूको. ९. मध्याहारः मूको. १०-१०. धनसमृद्ध मूको. ११. राया मूको. १२. रथी मूको. १३. तुचेदं मूको. १४. °त्रा छ कर्प. १५. °यितुं वि° छ कर्प.

स्कन्द० पर्षि[1] लोडर्थेऽत्र लट्। पालय। तोकम् तनयम् पुत्रं च पौत्रं चास्माकम्। पर्तृभिः[2] भावेऽर्थं तृच्[3] छान्दसत्वात्। पालनैः[4] त्वम् अदब्धैः अहिंसितैः केनचिदपि हिंसितुमशक्यैः। अप्रयुत्वभिः युं मिश्रणे। [5]अप्रमिश्रणम् अप्रयुत्[5], [6]तद्वत् अप्रयुत्वत्। मत्वर्थे वनिप्। तैः अप्रयुत्वभिः। अन्येषामिश्रितैः। अत्यन्तासाधारणैरित्यर्थः। किञ्च हे अग्ने! हेळांसि क्रोधरूपाणि दैव्या[7] देवानां स्वरूपाणि भूतानि युयोधि पृथक् कुरु नः[8] पञ्चम्यर्थेषा षष्ठी। अस्मत्तः। अस्माकमुपरि ये देवानां क्रोधाः तान् अपनयेत्यर्थः। न च तानेव केवलान्। किं तर्हि। अदेवानि ह्वरांसि च अदेवा रक्षआदयः, तत्कर्तृकाणि यानि तानि तत्सादृश्यर्थाद् अदेवानीत्युच्यन्ते। ह्वरांसि हिंसाकौटिल्यानि च। ह्वृ कौटिल्ये इति। रक्षआदीनां हिंसाकौटिल्यानि [9]चाहृत्य या मत्स्वासु[9] प्रवृत्तयः तास्चेत्यर्थः॥ १०॥[10]

वेङ्कट० पालय[11] पुत्रम् पौत्रं च पालनोपायैः त्वम् अहिंसितैः असक्तैः। अग्ने! क्रोधान् देवकृतान्[12] पृथक् कुरु, अस्माकम् रक्षांसि च कुटिलगमनानि॥ १०॥

[13]इति चतुर्थाष्टके अष्टमाध्याये द्वितीयो वर्गः[13]॥

आ स॑खायः सब॒र्दुघां॑ धे॒नुम॑जध्व॒मुप॒ नव्य॑सा॒ वचः॑। सृ॒जध्व॒मन॑पस्फुराम्॥११॥

आ। सखा॑यः। स॒बः॒ऽदुघा॑म्। धे॒नुम्। अ॒ज॒ध्व॒म्। उप॑। नव्य॑सा। वचः॑। सृ॒जध्व॑म्। अन॑पऽस्फुराम्॥११॥

स्कन्द० 'आदित्यो वा मरुतो वा पृश्नयो वा प्रगाथः, तत्र योऽयमनन्तरः प्रगाथोऽत्र सूक्ते, पृश्निदेवतो वा। त्रयाणां येषां प्रगाथ इति अयम् आख्यातः, स आदित्यदेवतो मरुद्देवतो वा पृश्निदेवतो वा। प्रगाथः इति अयम् आख्यातः, स आदित्यदेवतो मरुद्देवतो वा पृश्निदेवतो वा। तत्र विकल्पाना पृश्निदेवतात्वम् ऋगर्धेऽरण्याल्पतमं दृश्यते। पृश्निरिति च मरुतां मातोच्यते। कुत एतत्। 'पृश्निं वोचन्त मातरम्' (ऋ ५,५२,१६) इत्यादौ मन्त्रान्तरे पृश्नेर्मरुतां मातृत्वदर्शनात्। सा च गौः। 'गोमातरो यच्छुभयन्ते अञ्जिभिः' (ऋ १,८५,३) इति दर्शनाद् गोशब्दस्य च सर्वादिमत्यां गवि प्रसिद्धतरत्वात्। द्यौर्वा पृश्निशब्दस्य द्युनामत्वात्।

हे सखायः! ऋत्विजः सबर्दुघाम् सबः अमृतं तत्सदृशं वा वृष्टिलक्षणम् उदकं तद् या दोग्धि पृश्निः दोग्ध्री द्यौर्वा सा सबर्दुघा तां धेनुम् दोग्ध्रीम् आ अजध्वम् आगतिरित्यर्थः। सामर्थ्याच्चान्तर्णीतण्यर्थः[14]। आगमयत स्वयम्। आगत्य च नव्यसा नवतरेण अन्यैः स्तोतृभिरदृष्टपूर्वेण वचः[15] तृतीयार्थे एषा प्रथमा। वचसा स्तुतिलक्षणेन उप सृजध्वम् उपेत्येष समित्यस्य स्थाने। संसृजत[16] मिश्रयत। स्तुतेत्यर्थः। कीदृशीम्। उच्यते। अनपस्फुराम् अविचालिनीम्॥ ११॥[17]

वेङ्कट० शौनकः—'आदित्यो वा मरुतः पृश्नयो वा प्रगाथस्तत्र' (बृ. बृदे ५,११२,११४; क्रम २, ६,४८) इति। अस्मिन् सूक्तेऽयं[18] प्रगाथ आदित्यदेवतो वा मरुद्देवतो वा पृश्निदेवतो वेत्यर्थः। तत्र पृश्नि देवतात्वम् ऋगर्धेषु[19] दृश्यते। हे सखायः! अमृतदुघाम् धेनुम् नवतरेण स्तोत्रेण उप आ अजध्वम्, विसृजध्वं[20] च दातुः तां अस्फुरन्तीम्॥ ११॥

1. पर्षि मूको. 2. पर्तृभिः वि[1]; पर्तृभिः वि[3]. 3. तृ वि[1]. 4-4. पालनैः मूको. 5-5. अप्रमिश्रितमप्रयुक्तत्वात् मूको. 6-6. प्रयुक्तमयुक्तत्वं मूको 7. दैवा मूको. 8. ना मूको. 9. चाहृत्योत्सासु मूको. 10. मूको. इदं भाष्यम् २११समभन्त्रभाष्यस्य मध्ये पठितम्. 11. पा° मूको. 12. देव ल एवं. 13-13. नास्ति मूको. 14. आगमयथ मूको. 15. ण न मूको. 16. संसृजत मूको.° 17. मूको. इदं भाष्यम् २११समभन्त्रभाष्यानन्तरं प्रमादाल्लिखितम्. 18. सूक्ते° मूको. 19. पृश्नि° ल एवं 20. विसृजत मूको.

या शर्धा॑य॒ मारु॑ताय॒ स्वभा॑नवे॒ श्रवोऽमृ॑त्यु॒ धुक्ष॑त ।
या मृ॑ळी॒के म॒रुतां॑ तु॒राणां॒ या सु॒म्नैरे॑व॒याव॑री ॥ १२ ॥

या । शर्धा॑य । मारु॑ताय । स्वऽभा॑नवे । श्रवः॑ । अमृ॑त्यु । धुक्ष॑त ।
या । मृ॒ळी॒के । म॒रुता॑म् । तु॒राणा॑म् । या । सु॒म्नैः । ए॒व॒ऽयाव॑री ॥ १२ ॥

स्कन्द० [1]या किं करोति । उच्यते — [1]या शर्धाय बलाय मारुताय मरुत्समूहलक्षणाय स्वभानवे स्वयं-दीप्ताय श्रवः अन्नम् अमृतलक्षणं वृष्ट्युदकलक्षणं वा अमृत्यु कार्यशब्दोऽयं कारणे प्रयुक्तो 'नड्वोदकं पादरोगः' इति यथा । अमृत्युकारणभूतम् धुक्षत दोग्धि । या स्वपुत्राणां मरुताम् शर्धाय अमृतं वृष्ट्युदकलक्षणं वा दोग्धीत्यर्थः । या च मृळीके सुखे । सप्तमीनिर्देशाद् वर्तत इति वाक्यशेषः । तेनतेन उपकारेण सुखं करोतीत्यर्थः । केषाम् । मरुताम्[2] । या च तुराणाम्[3] हिंसि-तॄणाम् सुम्नैः सहयोगलक्षणैषा तृतीया । सुखैः सह एवयावरी '[3]एवशब्दः कामवचनः', यातिरपि अन्तर्णीतण्यर्थः । कामानां याऽपगमयित्री स्तोतॄन् प्रति । सुखानाम् अन्येषां च कामानां स्तोतॄणां प्रापयित्रीत्यर्थः । या श्रवो धुक्षत[4], या च मृळीके[5] मरुतां वर्तते, या च एवयावरी, तां[6] सबर्दुघां धेनुम् अजध्वं संसृजध्वं चेत्यनेन वचसेत्येवं यच्छब्दश्रुतेस्तच्छब्दम् अध्याहृत्यास्या ऋचः पूर्वयर्चैकवाक्यता योज्या । मारुतत्वपक्षे त्वस्य प्रगाथस्य — या शर्धाय मारुताय श्रवो धुक्षत या च मृळीके मरुताम्, तां सबर्दुघां धेनुम् अजध्वम् संसृजध्वम् च नव्यसा वचसा । '[6]सा या काचि-दित्येवं' मरुतां प्राधान्याद् देवतात्वं गुणभावश्च धेनोरिति व्याख्येयम् । आदित्यदेवतात्वपक्षे तु — शर्धाय मारुताय स्वभानव इत्येतैरादित्यसमूह उच्यते इति व्याख्येयम् । कथम् । मरुतां सम्बन्धी मारुत आदित्यसमूहः । केन सम्बन्धेन सम्बन्धीति । तदीयरसादानलक्षणेन । अथवा मारुत इति मरुतां[7] नाम । तेषां स्तुत्यतया सम्बन्धी मारुत आदित्यसमूहः । स्वयं च दीप्तत्वात् स्वभानुः । तस्मै स्तुत्यां[8] दास्यत इत्येवमर्थः । या द्यौः श्रवः वृष्ट्युदकलक्षणमन्नं दोग्धि, या च मृळीके मरुताम् आदित्यसमूहसम्बन्धिनां वर्तते, तां सबर्दुघां धेनुं दिवम् अजध्वम् संसृजध्वम् चेति । पूर्ववदेव चात्रापि सबर्दुघाया धेनोरप्राधान्यम् आदित्यगणस्यैव प्राधान्याद् देव-तात्वमिति ॥ १२ ॥

वेङ्कट० या मारुताय वेगाय स्वभूतदीप्तये श्रवणीयम् अमरणं वदेषु पयः धुक्षत[9] । या च मरुताम् गन्तॄणाम् सुखे वर्तते । या च सुखैः सदैव गमनशीला । यदा मारुतः प्रगाथः तदा मरुतां मातृद्वारा स्तुतिः । अथ यदाऽऽदित्यः तदा तेषां माता । अदितिर्हि पृश्नि-र्भूत्वा मरुतश्चोत्पादयामास ॥ १२ ॥

भ॒रद्वा॑जा॒याव॑ धुक्षत द्वि॒ता । धे॒नुं च॑ वि॒श्वदो॑हस॒मिषं॑ च वि॒श्वभो॑जसम् ॥ १३ ॥

भ॒रत्ऽवा॑जाय । अव॑ । धु॒क्ष॒त॒ । द्वि॒ता । धे॒नुम् । च॒ । वि॒श्वऽदो॑हसम् । इष॑म् । च॒ । वि॒श्वऽभो॑जसम् ॥ १३ ॥

---

1-1. मूको. इदं भाष्यम् ॥ ११तममन्त्रभाष्यात् परं प्रमादाल्लिखितम्. †-† या प्रथावयि मूको.
2. नास्ति मूको. 3-3. "शब्दानाम वचनः मूको. 4. धुक्ष मूको. 5. नास्ति मूको. 6-6. साध्याकाचि° वि°; मध्यविधि° वि°. 7. मरुति मूको. 8. स्तुत्या मूको. 9. धुक्ष मूको; धुक्षत् ए प्रस्तावः.

वेङ्कट० तम् युष्मदर्थम् इन्द्रम् च सुप्रज्ञानम् वरुणम् च प्रज्ञावन्तम् अर्यमणम् च मादयितारम् गच्छद्धं प्रदातारम् विष्णुम् च स्तौमि[1] धनादेशाय[2] ॥ १४ ॥

त्वेषं शर्धो न मारुतं तुविष्वण्यनर्वाणं पूषणं सं यथा शता ।
सं सहस्रा कारिषच्चर्षणिभ्य आँ आविर्गूळ्हा वसू करत् सुवेदा नो वसू करत् ॥१५॥

त्वेषम् । शर्धः । न । मारुतम् । तुविऽस्वनि । अनर्वाणम् । पूषणम् । सम् । यथा । शता ।
सम् । सहस्रा । कारिषत् । चर्षणिऽभ्यः । आ । आविः । गूळ्हा । वसु । करत् । सुऽवेदा । नः । वसु । करत् ॥

स्कन्द० किम् इन्द्रादीनेव केवलान् । न । किं तर्हि । त्वेषम् न-शब्दः पूर्ववत् पदपूरणः । समुच्चयार्थो वा । त्वेषमित्यर्थश्च यद्वनसमर्थमेव । त्वेषम् शर्धः दीप्तं च [3]बलम् कर्म[3] तत् मारुतम् मरुत्सम्बद्ध लक्षणम् । कीदृशम् । तुविष्वणि तुविशब्दम् । न च मारुतमेव शर्धः केवलम् । अनर्वाणम् पूषणम् अनर्वाणमित्येतत् पुल्लिङ्गत्वादुत्तरस्य पूष्णो विशेषणम्, न पूर्वस्य मारुतस्य शर्धस[4] । अस्य चान्यं प्रति माश्रितत्वया सामर्थ्यत्वम् । अनर्वाणम् अन्यत्राऽनाश्रितं पूषणम्[5] । सम् यथा शता सम् सहस्रा कारिषत् । समित्युपसर्गस्य शतेषु सहस्रेषु च भेदेन श्रुतेः कारिषदित्याख्यातमपि[6] भेदेनैव योजयितव्यम् । यथैषाम् इन्द्रादीनाम् एकैकः [7]वैश्वदेवो गणः[7] स्तुत्याराधितः सम् कारिषत् सम्यक् करोति शतानि । कस्य । सामर्थ्याद् अभिप्रेतानाम् । सम् सहस्रा कारिषत् सहस्राणि च सम्यक् करोति । चर्षणिभ्यः षष्ठ्यर्थे एषा चतुर्थी । चर्षणीनां मनुष्याणाम् अस्माकम् । अथवा इयं सम्प्रदान एव चतुर्थी । तच्छ्रुतेस्तु ‘कारिषत् इति’ करोतिः क्रियासामान्यवचन इह दाने वर्तते । यथा शतानि सहस्राणि च सम्यग् ददाति मनुष्येभ्योऽस्मभ्यमित्यर्थः । यथा [8]‘गूळ्हा गूढानि’[8] वसु वसूनि धनानि आविः[9] करत् आविष्करोति । अप्रख्यातानि यानि तानि लोके प्रख्यातानि करोतीत्यर्थः । यथा च सुवेदा विन्दतेर्लाभार्थस्येदं रूपम् । सुलभानि नः [10]वसु वसूनि करत् करोति[10] ॥ १५ ॥

वेङ्कट० दीप्तम् शर्धः[11] च मारुतम् बहुस्वनम्[11] तथास्मिन् अप्रत्यृतम् पूषणम् च स्तौमि सह स्तुतिं[12] करोमि यथा शतानि[13] सहस्राणि च वसूनि करोति मनुष्येभ्यस्तथा स्तौमि । स पूषा अस्माकम् गूढानि वसूनि आविः करोतु सुधनः । भरद्वाजायेति प्रायश्चि[14] मारुतो[15] गणो वा स्तूयते । तत्रोपमार्थीयाः सङ्गच्छन्ते । तस्मिन् पक्षेऽयं मन्त्रः पौष्ण इति । यथा मारुतं शर्धोऽस्तौषम् एवं पूषणमपि स्तौमीति ॥ १५ ॥

आ मा पूषन्नुप द्रव शंसिषं नु ते अपिकर्ण आघृणे । अघा अर्यो अरातयः ॥ १६ ॥

आ । मा । पूषन् । उप । द्रव । शंसिषम् । नु । ते । अपिऽकर्णे । आघृणे । अघाः । अर्यः । अरातयः ॥ १६ ॥

---

१. स्तौ मूको. २. धनादादे° ख; धनम् प्रदेशा° लपं; धनागमादे° ख मस्ताव: ३-३. बलकर्म मूको. ४. शार्धस: मूको. ५. इतः परं १४ तममन्त्रभाष्यं मूलकोशे लिखितमासीत्. ६. कापानमि° मको. ७-७. 'देवोगुण मूको. ८-८ यार्थेदिति मूको. ९-९. गुहा गूढानि मूको. १०. नपि मूको. ११-११. नास्ति मूको. १२. रथं स मूको. १३. बहुभाग मूको. १४. नास्ति मूको. १५. मनानि मूको. १६. मार्गे मूको. १७. मारुने ख लपं.

वैरिणोऽस्माकम् वि हि नीनशः विनाशय। हिशब्दस्तु पदपूरणः। मा उत उतशब्दोऽत्र चार्थे। मा च त्वत्प्रसादात् सूरः सूर्यः अहः दिवसम् 'एव चन[1] 'एवशब्द एवमित्यस्यार्थे[1]। चनशब्द एवमिति श्रुतेर्यथेत्यस्यार्थे। यथा ग्रीवाः वेः पक्षिणः कश्चिद्धस्तेन सहसा[2] निरुध्य मारणार्थं धारयेद् एवम् आदधते दध धारणे। आधरद्। किं पुनरह्नो धारणम्। उच्यते। उपलब्धिविरोधः। स कथं भवति। यद्यन्धत्वं भवति। अन्धो ह्यह्नोपलभते, अत इदम् अदधारणप्रतिषेधद्वारेणाऽनन्धत्वमाशास्यते। मा च त्वत्प्रसादात् सूर्यो धार्षीद् येनाह्नोपलभामहे इत्यर्थः। सूर्यप्रभवं हि चक्षुः, अत इदं सूर्याद् अनन्धत्वमाशास्यते ॥ १७ ॥

वेङ्कट० मा काकानां[4] भर्तारं काकैर्वा निबिडम् उद् गृहः वनस्पतिम् इति पुत्रपौत्रपरिवृतस्यात्मनोऽनुद्धारणमाशास्ते। तदर्थम् अरातीः वि नाशय। मा अपि च सुवीरो योद्धा अहि एव पक्षिण्ये ग्रहणार्थम् ग्रीवाः आधारयत्[5] सुतं कण्ठे गृह्णात्विति अरातिभिः अनभिभवमाशास्ते ॥१७॥

दृतेरि॑व तेऽवृ॒कम॑स्तु स॒ख्यम् । अच्छि॑द्रस्य दध॒न्वतः॒ सुपू॑र्णस्य दध॒न्वतः॑ ॥१८॥

दृतेःऽइ॑व । ते॒ । अ॒वृ॒कम् । अ॒स्तु॒ । स॒ख्यम् ।
अच्छि॑द्रस्य । द॒ध॒न्ऽव॑तः । सुऽपू॑र्णस्य । द॒ध॒न्ऽव॑तः ॥ १८ ॥

स्कन्द० दृतेः इव[6] ते तव स्वभूतस्य त्वया सहैवास्माकम् अवृकम्[7] वृकशब्दोऽपि वृश्चतेः छेदनार्थस्य। अवृकम् अवृश्चनम् अच्छिन्नम्। समग्रमित्यर्थः। अथवा वृकसदृशं वृकं हिंसकम्। अवृकम् अहिंसकम्। अपि वा वृकमिति वृक वृक आदाने इत्यस्य रूपम्। अवृकम् अनादातृ। अभिप्रेतानाम् अनपहारकमित्यर्थः[8]। अस्तु भवतु सख्यम्[9]। कीदृशस्य दृतेः। उच्यते—अच्छिद्रस्य छिद्रवर्जितस्य। दृढस्येत्यर्थः। दधन्वतः दधिमतः। न च स्तोकेन दध्ना तद्वतः। किं पुनः। सुपूर्णस्य बहुना दध्ना पूरितस्य। प्रशंसायाम् अयमिदानीं मतुप्। तेनापौनरुक्त्यम्[11]। प्रशस्तेन दध्ना तद्वतः ॥ १८ ॥

वेङ्कट० दृतेः इव ते अहिंसकम् अस्तु सख्यम् अच्छिद्रस्य दधियुक्तस्य अत्यन्तं पूर्णस्य ॥ १८ ॥

पु॒रो हि म॒र्त्यैरसि॑ स॒मो दे॒वैरु॒त श्रि॒या ।
अ॒भि ख्य॑ः पूषन् पृत॑नासु न॒स्त्वम॑वा नू॒नं यथा॑ पु॒रा ॥ १९ ॥

पु॒रः । हि । म॒र्त्यैः । असि॑ । स॒मः । दे॒वैः । उ॒त । श्रि॒या ।
अ॒भि । ख्य॒ः । पू॒ष॒न् । पृत॑नासु । नः॒ । त्वम् । अ॒व॒ । नू॒नम् । यथा॑ । पु॒रा ॥ १९ ॥

स्कन्द० परो हि मर्त्यैः[12] इति परशब्द उत्कृष्टवचनः। हिशब्दो यस्मादर्थे। यस्माद् उत्कृष्टः। मर्त्यैः पञ्चम्यर्थे एषा तृतीया। मनुष्येभ्यः त्वम् असि[13]। समः च देवैः इन्द्रादिभिः श्रिया च लक्ष्म्या। उत-शब्दस्तु पदपूरणः। यस्मादिति वचनात् तस्मादित्यध्याहार्यम्। तस्माद्

1-1. एकवचन मूको. 2. इत्यस्यार्थे मूको. 3. सहसा मूको. 4. कानाम् मूको. 5. अधा° व ग्रन्थ. 6. इति मूको. 7. अवृ° मूको. 8. वा मूको. 9. "नापहा" मूको. 10. स सख्यः मूको. 11. तेन पौन° मूको. 12. म मूको. 13. असि मनुष्येभ्यः मूको.

अमित्रः अभिपश्य[1] हे पूषन्! पृतनासु सङ्ग्रामेषु नः अस्मान् त्वम्[2] अव पालय नूनम् नूनं-शब्दोऽत्रेदानीमित्यस्यार्थे। इदानीम् यथा पुरा पूर्वस्मिन् काले तद्वत् ॥ १९ ॥

वेङ्कट० मर्त्येभ्यस्त्वम् परः हि भवसि। देवैः च समः भवसि धनेन। 'पूषा वै धनानामधर्म पाणिभ्यामुपनिधाता' ( तु. माश १,१,२,१७ ) इति विज्ञायते। अभि पश्य[3] अस्मान् त्वम् पूषन्! सङ्ग्रामेषु। रक्ष इदानीमपि,[4] यथा पुरा 'त्वम् अरक्षः'[5] ॥ १९ ॥

वामी वामस्य धूतयः प्रणीतिरस्तु सूनृता ।
देवस्य वा मरुतो मर्त्यस्य वेजानस्य प्रयज्यवः ॥ २० ॥

वामी । वामस्य । धूतयः । प्रऽनीतिः । अस्तु । सूनृता ।
देवस्य । वा । मरुतः । मर्त्यस्य । वा । ईजानस्य । प्रऽयज्यवः ॥ २० ॥

स्कन्द० "तृचः परो मारुत.[6] पृश्निसूक्ते[6]" ( बृदे ५,११३ )। तृचोऽयं पौष्णीभ्यः परः मरुद्देवतः पृश्निसूक्ते। पृश्निसूक्तमिति पृश्निसम्बन्धात् तृणपाणिकस्य "पृथ्वीचायेस......"। वामी[7] वननीया युष्माकम् वामस्य वननीयस्य हविषः एकदेशभूता यजमानस्य स्वभूता। हे धूतयः! कम्पयितारः! शत्रूणाम् प्रणीतिः देवान् प्रति प्रणीयमानत्वात्[8] प्रणीतिशब्देनाहुतिरुच्यते[9]। सा अस्तु [10]भवतु, सूनृता वाक् च स्तुतिलक्षणा[10]। आहुतिं स्तुतिं च सम्भजध्वमित्यर्थः। अथवा प्रणीतिर्नामोपदेशेन कार्येषु प्रवर्तना[11] [12]सा युष्मदीया[12] वननीया वननीयस्य यजमानस्य[13], सूनृता वाक् च गर्जितलक्षणा। यूयं सम्भजध्वं[14] यजमानस्य कार्योपदेशं गर्जितशब्दं च [15]कुरुतेत्यर्थः[15]। कतमस्य यजमानस्य। उच्यते। देवस्य वा हे मरुतः! मर्त्यस्य वा मनुष्यस्य वा। यावान् कश्चित् सर्वस्येत्यर्थः। ईजानस्य यजतः प्रयज्यवः! प्रकर्षेण यष्टव्याः! ॥ २० ॥

वेङ्कट० तृचः परो मारुतः। वननीया यजमानस्य[16] हे कम्पयितारः! प्रणीतिः अस्तु सत्या, देवस्य वा मरुतः![17] मर्त्यस्य वा यजमानस्य हे प्रकर्षेण यष्टव्याः! ॥ २० ॥

सद्यश्चिद्यस्य चर्कृतिः परि द्यां देवो नैति सूर्यः ।
त्वेषं शवो दधिरे नाम यज्ञियं मरुतो वृत्रहं शवो ज्येष्ठं वृत्रहं शवः ॥ २१ ॥

सद्यः । चित् । यस्य । चर्कृतिः । परि । द्याम् । देवः । न । एति । सूर्यः ।
त्वेषम् । शवः । दधिरे । नाम । यज्ञियम् । मरुतः । वृत्रऽहम् । शवः । ज्येष्ठम् । वृत्रऽहम् । शवः ॥

स्कन्द० यस्य यजमानस्य । किम् । उच्यते — सद्यः चित् चिच्छब्दोऽत्र एवार्थे । सद्य एव यस्य स्वभूता

---

1. °पश्य मूको. 2. त्वमभिपश्य मूको. 3. अपि प० मूको. 4. इदान° मूको. 5-5. त्वमरक्ष मूको. 6. °शब्दोत्र मूको. 6-6. तृचापरो मारुतः मूको. 7-7. °वानं स वामी मूको. 8. प्रणीयमान° मूको. 9. °ह्यते° मूको. 10-10. भवतु स्तुति° मूको. 11. प्रवर्तमानाः मूको. 12-12. सा युष्मद° मूको. 13. °मानस्य° मूको. 14. °भजध्वं° एवं; °भजत्यम् इ. ध्रुव मूको. 15. संभावनार्थस्य मूको. 15-15. कार्योपदेशा मूको. 16. °मानस्य मूको. 17. मरु मूको.

चर्कृतिः पुनःपुनः क्रियायोगाख्या याम् दिवः परि एति सर्वतो गच्छति। देवः न सूर्यः यथा देवः[1] सूर्यः। स एकस्मिन्नेवाह्नि असकृद् देवान्[2] यजत इत्यर्थः। परोऽर्धर्चः पूर्वापेक्षो भिन्नं वाक्यम्। त्वेषम् दीप्तम् शवः बलम् दधिरे धारयन्ति नाम यज्ञियम् यज्ञार्हम् मरुतः। कथमन्नु पुनरुक्तम्। स्वविधैः मरुत इत्येतदेव। वृत्रहम् वृत्रहननसमर्थमपि बलम्। 'वृत्रशरीरहननप्रवृत्तमित्यर्थः[3]'। तवैषाम्[4] शवः बलं सेनालक्षणम् ज्येष्ठम् अतिशयेन च प्रशस्यं वृद्धं वा। न च केवलं सेनालक्षणमेव बलम्। किं तर्हि। वृत्रहम् शवः शरीरसामर्थ्यलक्षणमपि बलम्। वृत्रशरीरशतेन प्रशातेन वेत्यर्थः॥ २१॥

वेङ्कट० तदानीम् एव यस्य शत्रुसोऽनुस्यूतम् कारणम्[5] अन्तरिक्षम् परि गच्छति द्युलोकम् इव देवः[6] सूर्यः। तद् दीप्तम् वृत्रादीनां नाशकम् शवः दधिरे मरुतः यज्ञियम् शत्रूणां हन्तृ प्रशस्ततरम्॥ २१॥

सकृद्ध द्यौरजायत सकृद् भूमिरजायत।
पृश्न्या दुग्धं सकृत् पयस्तदन्यो नानु जायते॥ २२॥

सकृत्। ह। द्यौः। अजायत। सकृत्। भूमिः। अजायत।
पृश्न्याः। दुग्धम्। सकृत्। पयः। तत्। अन्यः। न। अनु। जायते॥ २२॥

स्कन्द० सकृत्। ह शब्दोऽत्र एवार्थे। सकृदेव द्यौः अजायत जाता उत्पन्ना[7]। सकृत् एव भूमिः अपि अजायत। पृश्न्याः अपि मरुतां मातुः दुग्धम् क्षरितम्। सकृत् एव अमृतरूपम् पयः। तत् एतत् त्रयम् अन्यः कश्चित् न अनु जायते। जनिरत्र सामर्थ्यात् करोत्यर्थे। नानुकरोति[8]। अथवा अन्विति पश्चाद्भावे। सदित्येतेन च सम्बध्यते। तद्नु तस्य त्रयस्य पश्चादन्यो न जायते न भवति। 'तत्रान्यो नानुगन्तुं[9] शक्नोतीत्यर्थः[10]'।

'आदित्यो वा मारुतः "शर्म्य एव" वा' (वृ. दे ५,११४)। यो मारुतस्तृच उक्तः, अयम् आदित्यदेवतो वा पृश्निदेवत एव वा। मरुतस्तु 'अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति, परोक्षकृतानि स्तोतव्यानि' (या ७,२) "इत्येतेन न्यायेन गुणभूताः"। कथं पुनरस्या ऋचो मारुतत्वम्, यदीयं मरुत्स्तुत्यर्था। उच्यते। इयमपि मरुत्स्तुत्यर्थैव। कथम्। यत्तावदत्र 'सकृद्ध द्यौरजायत सकृद् भूमिरजायत' इति द्यावाभूम्योः सकृज्जननसङ्कीर्तनम् तत्[11] यथा ब्राह्मणे - कस्मिंश्चित् किञ्चित् प्रतिज्ञाय निर्वदति—'सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति ब्राह्मणाः। सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत्सकृत्' "इत्यादिवचनैः समानार्थम्"। यथा राजानः सकृज्जल्पन्ति, यथा कन्या सकृत्प्रदीयन्ते, तथा ब्राह्मणा अपि सकृज्जल्पन्तीति। तथा तत्र एवम्[12] दृष्टान्तपरम्: यथा द्यौः "सकृज्जाता यथा च" भूमिः, एवं दुग्धं पय इति। पृश्न्या दुग्धं सकृत्पय इत्येतदपि मरुतां स्तुत्यर्थः। कथम्। पृश्निर्हि मरुतां माता। मातुश्च गुणकीर्तनं लोकेऽपि पुत्रस्य

1-1. देवा सूर्यं मूको. 2. 'भेसाहन्मसे हृद' मूको. 3-3. 'शरीरशते नवशतेन वेत्यर्थः मूको. 4. तेषाम् मूको. 5. रणम् मूको. 6. देव मूको. 7. उत्प ना मूको. 8. नु नानु' मूको. 9-9. तत्रान्योन्यानुगन्तुम् मूको. 10. मातृतिवाक्य स्तुतिलक्षणा मूको 11-11. पार्थ एव मूको. 12-12. 'न्यायेनोदभूता मूको. 13. नास्ति मूको. 14-14. 'वचनादर्थं सम्यगार्थः मूको. 15-15. जाता था च मूको.

स्तुत्यर्थं दृश्यते । यथा देवदत्ताय कन्या[1] 'प्रदिदिसिता यदा, तदा[2] देवदत्तस्य माता सुशीला क्षमावती स्नुषावत्सला चेत्यादिगुणकीर्तनम्, एवं मरुत्स्तुत्यर्थत्वाद् अस्या ऋच उपपन्नं मारुतत्वम् । 'आदित्यो वा मारुतः पार्श्व एव वा' । योऽयं मारुतस्तृच उक्तः अयम् आदित्यदेवतो[3] वा "पृश्निदेवत एव[4] वा । मरुतस्तु 'अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति, परोक्षकृतानि स्तोतव्यानि' ( या ७,२ ) इत्येतेन न्यायेन गुणभूताः ।

तत्रादित्यदेवतात्वे तावदाद्यायाः[5] तावदेष एवमर्थयोजना—वामी वामस्येति । वामो वननीय आदित्यः तस्य प्रणीतिराहुतिर्वान्यस्तुतिलक्षणा सम्भजनीयाऽस्तु । 'देवस्य मर्तस्य वा यजत[6]' इति । द्वितीयायामपि "प्रथमं यत् तदर्थम्[7] ईजानस्य विशेषणार्थः पूर्ववद्व्याख्येयः । द्वितीयेऽपि त्वेषं शवः शवसेतीत्यर्थस्य (तु॰ या २,१)। प्राधान्याश्रयणाद् द्वितीयाया अपि आदित्यदेवतात्वं तृचे[8] । तृतीयाया अपि आदित्यस्य प्रसादेन सकृत् द्यौरजायत सकृदेव भूमिः । 'आदित्येनैव सहितायाः पृश्न्याः[9] पृश्निरिति दिवो नाम । पञ्चमी चेयम् । दिवः सकाशाद् दुग्धं क्षरितं पय उदकं वृष्टिलक्षणम् । एकसंवत्सरापेक्षया चायं सकृद्व्यपदेशः । एकस्मिन् संवत्सरे सकृद् वर्षत्येव, नान्यदित्यर्थः । तदेतत्सर्वमादित्यादन्यो नानुकरोतीत्येवं तृतीयाया ऋचः आदित्यदेवतात्वम् । पृश्निदेवतात्वे त्वस्या ऋच एवं योजना—वामी वामस्येत्यत्र प्रणीतिशब्दः सर्वस्य प्रणेतृत्वात् पृश्निवाचकः[10] । सम्भजनी यस्य देवस्य मर्तस्य[11] वा सा तदीया च सूनृता प्रियवाक् सम्भजनीयाऽस्तु । सम्भजनी यस्य देवस्य मर्तस्य[11] वा सा तदीया च सूनृता प्रियवाक् सम्भजनीयाऽस्तु । प्राधान्याश्रयणा- पजत इति । त्वेषम् शव इत्यपि पृश्नेः पुत्रा मरुतः सदृशा इति पृश्न्याः प्राधान्याश्रयणा- देवतात्वम् । यथा च द्यौर्यथा च भूमिः सकृज्जाता एवं पृश्न्याः सकृद् दुग्धं सकृत्पयः । तथान्यो नानुकरोति । एवम् अस्याया अपि पार्श्वत्वम् । यद्यपि चादित्यत्वपार्श्वत्वे चास्य तृचस्य ऋगक्षरेषु नात्यन्तारूढे, तथापि श्रुतिं कामप्यपेक्ष्य शौनकेनोक्ते इति अस्माभिरवगते इति ॥ २२ ॥

वेङ्कट॰ सकृत् एव द्यौः अजायत । जाता सवित्रा[12] नित्या तिष्ठति । तथैव[13] भूमिः । यथा पृश्न्याः च पयः मरुतां जनकम् सकृत् एव दुग्धम् आत्मवीर्येणास्मिन्[14] ततः अन्यः न अनु जायते ॥ २२ ॥

[15]इति चतुर्थाष्टके अष्टमाध्याये चतुर्थो वर्गः[15] ॥

[ ४९ ]

[16]ऋजिश्वा भारद्वाज ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः, पञ्चदशी शक्वरी[16] ॥

स्तुषे जनं सुव्रतं नव्यसीभिर्गीर्भिर्मित्रावरुणा सुम्नयन्ता ।
त आ गमन्तु त इह श्रुवन्तु सुक्षत्रासो वरुणो मित्रो अग्निः ॥ १ ॥

---

१. कन्यां मूको. २-२. प्रदिदिसा॰॰॰ मूको. ३. देवदत्ते मूको. ४. °देवतमेव मूको. ५. °दाद्याया मूको. ६-६. वा मे वास्या यजते मूको. ७-७. प्रथमा तत्स्य दर्थम् मूको. ८. तृचा मूको. ९. आदित्येनैव पृश्न्याः मूको. १०. वाचका मूको. ११. मर्त्यस्य मूको. १२. सवि° वि॰ स. १३. तर्थ मूको. १४. °वै त° वि॰. १५-१५. नास्ति मूको.

बृहद्रयिम् महाधनम्, विश्ववारम् सर्वस्य वरणीयम् रथप्राम् प्रातिः सामर्थ्यादिह गत्यर्थः। रथेन गन्तारम्। पूरणार्थ एव वा प्रातिः[1] देवरथानाम् आपूरयितारम्। वाय्वापूरितानि हि देवविमानानि शीघ्रं गच्छन्ति। परस्परधर्षकैः प्रत्यक्षकृतः मित्र वायवम्। शुतद्यामा दीप्तरथः नियुतः तृतीयार्थे प्रथमैषा। नियुद्भिः वडवाभिः[2] पत्यमानः गच्छन् कविः मेधावी कविम् मेधाविनम् यजमानम् इयक्षसि यक्षोतेरिदं रूपम्, न यजे. अभिशिशयसि। व्याप्तुमिच्छसीत्यर्थः। हे प्रयज्यो! प्रकर्षेण यष्टव्य! ॥ ४ ॥

वेङ्कट० प्र गच्छति वायुम् प्रति कुभूषतः बृहती इष्टिः महाधनम् सर्वैर्वरणीयम् स्तोतृणां रथस्य धनेन पूरयितारम् शरीरेण वा महता रथं पूरयन्तम्। दीप्तगमनः नियुतः प्रति गच्छन् कविः कविम् प्रति गच्छसि हे प्रकर्षेण यष्टव्य![3] ॥ ४ ॥

स मे वपुश्छदयदश्विनोर्यो रथो विरुक्मान् मनसा युजानः।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥ ५ ॥

सः। मे। वपुः। छदयत्। अश्विनोः। यः। रथः। विरुक्मान्। मनसा। युजानः।
येन। नरा। नासत्या। इषयध्यै। वर्तिः। याथः। तनयाय। त्मने। च ॥ ५ ॥

स्कन्द० अश्विनावत्र स्तूयेते। सः मे मम वपुः छदयत् रूपं छादयतु[1]। केन। सामर्थ्यात् [5]स्वेन आगमनेन। अनागतश्च[5] छादयितुं न शक्नोति, अतोऽत्राच्छादनेनागमनं प्रतिपाद्यते। मत्समीपम् आगच्छत्वित्यर्थः। कः[6] सः। उच्यते — युवयोः अश्विनोः स्वभूतः यः रथः विरुक्मान् विविधदीप्तिमान् मनसा युजानः वाच्छील्येऽयं चानश्, मनसा योजनशीलः। युयुक्षितमात्रः[7] स्वयमेव यो युज्यत इत्यर्थः। येन च हे नरा! मनुष्याकारौ! नासत्या! नासत्यनामानौ! यद्यपि चाश्विनोरेको नासत्यनामा दस्रनामाऽपरः, तथापि [8]साहचर्याद् उभयोर्नासत्यव्यपदेशः[8]। यद्वा न[9] असत्यौ सत्यावेव। इषयध्यै नेदम् इषेर्धातो रूपम्। किं तर्हि। इषदित्यन्ननाम तस्मात् तत्करोति इति णिच्, ण्यन्तात् 'तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यै' (पा ३,४,९) इति अध्यैप्रत्ययः। अन्न कर्तुम्। दातुमित्यर्थः। वर्तिः वर्तन्या प्रसिद्धेन मार्गेण याथः गच्छथः। कस्मै अन्न दातुम्। उच्यते — तनयाय अपत्याय यष्टुः स्तोतुश्च त्मने च आत्मने च ॥ ५ ॥

वेङ्कट० सः मह्यम् रूपम् प्रकाशयति। अश्विनोः स्वभूतः यः रथः विरोचनवान् मनसा युज्यमानः। येन हे नेतारौ![10] नासत्यौ! अन्नं कर्तुम् मार्गम् याथः[11] पुत्राय आत्मने पित्रे च ॥ ५ ॥

[12]इति चतुर्थाष्टके अष्टमाध्याये पञ्चमो वर्गः[12] ॥

पर्जन्यवाता वृषभा पृथिव्याः पुरीषाणि जिन्वतमप्यानि।
सत्यश्रुतः कवयो यस्य गीर्भिर्जगतः स्थातर्जगदा कृणुध्वम् ॥ ६ ॥

१. नास्ति वि॰. २. कुश नास्ति मूको. ३. °तः मूको. ४. छादयतु मूको. ५-५. स्वेनागम° मूको. ६. कः मूको. ७. योजनयुक्तमात्रः मूको. ८-८. 'नौ युवयो' मूको. ९. नास्ति मूको. १०. °रौ मूको. ११. यथा मूको. १२-१२. नास्ति मूको.

न च केवलं धियम् । किं तर्हि । अच्छिद्रम् [१]छिद्रवर्जितम् । सुदृढमित्यर्थः[१] । शरणम् गृहम् दुराधर्षम् केनचिदप्यभिभवितुम् अशक्यम् गृणते स्तुवते महाम् शर्म सुखं च यंसत् ददातु ॥ ७ ॥

वेङ्कट० पावीरवी शोधयित्री कमनीया पूजनीयाश्च सरस्वती वीरपत्निका कर्म धारयतु, [२]'छन्दांसि वै ग्राः' ( माश ६,५,४,७ ) इति[२] ब्राह्मणम् । ताभिः सङ्गता अच्छिद्रम् गृहम् दुराधर्षम् स्तुवते[३] सुखं च प्रयच्छतु ॥ ७ ॥

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥ ८ ॥

पथःऽपथः । परिऽपतिम् । वचस्या । कामेन । कृतः । अभि । आनट् । अर्कम् ।
सः । नः । रासत् । शुरुधः । चन्द्रऽअग्राः । धियम्ऽधियम् । सीसधाति । प्र । पूषा ॥ ८ ॥

स्कन्द० पूषाऽत्र स्तूयते । स नो रासदिति तच्छब्दाद् यच्छब्दोऽध्याहार्यः । यम् पथस्पथः यावान् [४]कश्चित्पन्थास्तस्य सर्वस्य परिपतिम्[४] परीत्ययमुपसर्गोऽधीत्येतस्य[५] स्थाने । अधिपतिम् स्वामिनम् । पूषा हि महति पथि प्रतिभये वा रक्षां करोति । अतः पथोऽधिपतिरुच्यते । वचस्या तृतीयैकवचनस्यायम् याजादेशः । स्तुतिलक्षणेन [६]वचसा कामेन कृतः करोतिः क्रियासामान्य-वचनः[६] । सामर्थ्यादिह प्रेरणे[७] वर्तते । अभिलषितेच्छया[८] प्रेरितः । अभि आनट् अभिव्याप्नोति । स्तौतीत्यर्थः । अर्कम् देवम् । सः नः अस्मभ्यम् रासत् ददातु शुरुधः । अन्यत्र शुरुध आपो भवन्ति शुचं संरुन्धन्तीति । [९]इह तु सामर्थ्याद् धनानि[९] । तान्यपि हि शुचं मनो-दुःखम् उपभोगसाधनाभावकृतं संरुन्धन्तीति । कीदृशीः शुरुधः । उच्यते । चन्द्राग्राः चन्द्रं चन्दतेः[१०] कान्तिकर्मणः । कान्तं[११] प्रियम् अग्रं यासां ताश्चन्द्राग्राः । आयत्यामपि हितानुबन्धीनि धनानीत्यर्थः । किञ्च [१२]धियंधियम् कर्मकर्म[१२] ज्योतिष्टोमादिकम् सीषधाति लेडर्थेऽयं पञ्चमो लकारः । व्यत्ययेन च विकरणः । प्र साधयतु पूषा ॥ ८ ॥

वेङ्कट० सर्वस्य मार्गस्य स्वामिनम् स्तोत्रेच्छया कामेन वशीकृतो जनः व्याप्नोति[१३] अर्चनीयं पूषणम् । सः अस्मभ्यम् प्रयच्छतु शुचो रोधयित्रीः हिरण्यमुखाः पुष्टीः । कर्मकर्म च प्र साधयतु पूषा ॥ ८ ॥

प्रथमभाजं यशसं वयोधां सुपाणिं देवं सुगभस्तिमृभ्वम् ।
होता यक्षद् यजतं पस्त्यानामग्निस्त्वष्टारं सुहवं विभावा ॥ ९ ॥

प्रथमऽभाजम् । यशसम् । वयःऽधाम् । सुऽपाणिम् । देवम् । सुऽगभस्तिम् । ऋभ्वम् ।
होता । यक्षत् । यजतम् । पस्त्यानाम् । अग्निः । त्वष्टारम् । सुऽहवम् । विभाऽवा ॥ ९ ॥

---

१-१. "वर्जित ... इति" मूको. २-२. नास्ति मूको. ३. स्तुवके मूको. ४-४. पन्थाः ... परिपतिम् मूको. ५. °त्येष दधीतस्य वि[१]; °त्येष दधातीत्यस्य वि[२]. ६-६. वचसा ... वचनः मूको. ७. प्रागे मूको. ८. अभिलषितेनेच्छया मूको. ९-९. इह ... धनानि मूको. १०. चन्दतो मूको. ११. कान्तः मूको. १२-१२. धियं धियं ... मूको. १३. व्याप्नोतीति वि[१] अ.

तत् । नः । अहिः । बुध्न्यः । अत्ऽभिः । अर्कैः । तत् । पर्वतः । तत् । सविता । चनः । धात् ।
तत् । ओषधीभिः । अभि । रातिऽसाचः । भगः । पुरम्ऽधिः जिन्वतु । प्र । राये ॥ १४ ॥

स्कन्द० अहिर्बुध्न्यादयो देवता अत्र ऋग्द्वये[1] स्तूयन्ते । तच्छब्दयोगयार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यत् प्रार्थयामहे तत् नः अस्मभ्यम् अहिः नाम मध्यमस्थानो देवः बुध्न्यः बुध्नमन्तरिक्षम्[2] तस्मिन् भवः 'अद्भिः सह' अर्कैः अन्यैश्चाग्न्यादिभिर्देवैः सह, तत् एव पर्वतः, तत् एव सविता[3] चनः अन्नम् धात दधातु । तत् एव ददतु ओषधीभिः सह आभिमुख्येन रातिषाचः हविर्दानस्य सेवितारो मरुतो विश्वे देवाः । किञ्च पुरंधिः बहुकर्मा बहुप्रज्ञो वा भगः[4] जिन्वतु प्र प्रकर्षेण प्रीणयत्वस्मान् राये तृतीयार्थे चतुर्थ्येषा । राया[5] ॥ १४ ॥

वेङ्कट० तत् अस्मभ्यम् अहिः बुध्न्यः उदकैः अर्चनीयैर्धनैश्च सह अन्नम् प्रयच्छतु पर्वतः सविता च । तत् अन्नम् नानाविधाभिः ओषधीभिः सह अभि प्रयच्छन्तु दानस्य सेवितारः अहिर्बुध्न्यादयः । भगः पुरंधिः चास्मान् धनार्थम् प्रीणयतु ॥ १४ ॥

नू नो॑ र॒यिं र॒थ्यं॑ चर्षणि॒प्रां पु॑रु॒वीरं॑ म॒ह ऋ॒तस्य॑ गो॒पाम् ।
क्षयं॑ दाता॒जरं॒ येन॒ जना॒न्स्पृधो॒ अदे॑वीर॒भि च॒ क्रमा॑म॒ विश॒ आदे॑वीर॒भ्य१॒॑श्नवा॑म ॥१५॥

नु । नः । र॒यिम् । र॒थ्यम् । च॒र्ष॒णि॒ऽप्राम् । पु॒रु॒ऽवीर॑म् । म॒हः । ऋ॒तस्य॑ । गो॒पाम् ।
क्षय॑म् । दा॒त॒ । अ॒जर॑म् । येन॑ । जना॑न् । स्पृधः॑ । अदे॑वीः । अ॒भि । च॒ । क्रमा॑म । विशः॑ ।
आऽदे॑वीः । अ॒भि । अ॒श्नवा॑म ॥ १५ ॥

स्कन्द० नु क्षिप्रम् नः अस्मभ्यम् रयिम् धनम् रथ्यम् रथं वहतीति रथ्य इति "कर्तरि यत् 'प्रतिमहायत्, तद्वहति रथयुगप्रासङ्गम्' ( पा ४,४,७५;७६ ) इति[6] । इह तु व्यत्ययेन कर्मणि द्रष्टव्यः । रथैर्वोढव्यम् । प्रभूतमित्यर्थः । चर्षणिप्राम् मनुष्याणां पूरकं[7] पोषकम् । हितमित्यर्थः । पुरुवीरम् 'बहुभिः वीरैः[8] पुत्रपौत्रैश्च युक्तम् [9]"महः महतः[9] ऋतस्य यज्ञस्य गोपाम् गोप्तारम् । यस्मिन् सति महानपि यज्ञो न त्यज्यते, शक्यत एव कर्तुम् । महतामपि यज्ञानां करणसमर्थमित्यर्थः । [10]क्षयम् निवासस्थानं[10] च दात दत्त । हे [12]अहिर्बुध्न्यौ ! भवद्भ्यां प्रेरिताः[12] अजरम् जरावर्जितम् अविनश्वरम् येन रयिणा क्षयेण[13] च जनान् मनुष्यान् स्पृधः स्पर्धितॄन् अदेवीः अभि च क्रमाम । चशब्द अदेवीरित्यस्मात्परो द्रष्टव्यः । देवेभ्यः अन्याः[14] अदेव्यः ताश्च[15] अभिक्रामेम । अभिक्रमणमवष्टम्भनं सुखाकरणं स्पर्धितॄणां चेष्यते । येन च विशः मनुष्यजातीः आदेवीः नित्यम् आगता देवा यासां ता आदेव्यः यज्वानः ताः अभि अश्नवाम अभिभवामनुयाम तदन्तर्गताः भूयास्म । नित्यं यजेमेत्यर्थः ॥ १५ ॥

---

१. ऋग्यो मूको. २. बुध्न्यम्° मूको. ३-३. ना स्तः मूको. ४. सवित्य मूको. ५. नास्ति मूको. ६. राये मूको. ७-७. यतीत्यह् प्र···तद्वहति रथ युगप्रासंगमिति मूको. ८. पूरणम् मूको. ९. रम्··· मूको. १०-१०. मह महत मूको. ११-११. ···वास° मूको. १२-१२. °बुध्न्याभ्यां प्रधिता मूको. १३. क्षेरणः मूको. १४. अन्यो मूको. १५ नास्ति मूको.

वेङ्कट० क्षिप्रम् अस्मभ्यम् इषवाहस् मनुष्याणां पूरकम् बहुभिर्वीरैर्युतम् महतः धनस्य एककम् गृहं च प्रयच्छत[1] अतारहितम् । येन निवासेन[2] स्पर्धयितॄन् मनुष्यान् अभि च भवाम । अभिभवार्थं स्पर्धेयित्रीरासुरीः विशः अभिक्रमाम, देवस्पर्धयित्रीश्च[3] विशः अभि आत्यधाम आभिमुख्येन प्राप्नुयामेति[4] ॥ १५ ॥

[5]इति चतुर्थाष्टके अष्टमाध्याये सप्तमो वर्गः[5] ॥

[ ५० ]

[6]ऋजिश्वा भारद्वाज ऋषिः । विश्वे देवा देवताः । त्रिष्टुप् छन्दः[6] ॥

हुवे वो देवीमदितिं नमोभिर्मृळीकाय वरुणं मित्रमग्निम् ।
अभिक्षदामर्यमणं सुशेवं त्रातॄन्देवान्त्सवितारं भगं च ॥ १ ॥

हुवे । वः । देवीम् । अदितिम् । नमःऽभिः । मृळीकाय । वरुणम् । मित्रम् । अग्निम् ।
अभिऽक्षदाम् । अर्यमणम् । सुऽशेवम् । त्रातॄन् । देवान् । सवितारम् । भगम् । च ॥ १ ॥

स्कन्द० [7]अदित्यादयोऽत्र स्तूयन्ते । हुवे वः इति[8] व्यत्ययेनेह बहुवचनम् । त्वाम् 'देवीम् अदितिम्' । न केवलाम् केवलान् । किं तर्हि । नमोभिः स्तुतिभिः मृळीकाय सुखार्थम् । वरुणम् मित्रम् अग्निम् च । अथवा[9] विशसितार अभिक्षदाम् क्षदतिः संस्कारार्थः । तमोऽपनयनेन सर्वस्य संस्कर्तारम् । अर्यमणम् सुशेवम् सुसुखम् । त्रातॄन् पालयितॄन् अन्यानपि हन्तारम् । कस्य । सामर्थ्याद् तमसाम् । देवान् सवितारम् भगम् च ॥ १ ॥

वेङ्कट० ह्वयामि युष्मदर्थम् अदितिम् नमस्कारैः हविर्भिः[6] वा वरुणादींश्च, क्षदतिः शकलीभावकर्मा[9], शत्रूणाम् आभिमुख्येन विशसितारम् धनानां वा पृथक्कर्तारम् अर्यमणम् सुसुखम् त्रातॄन् सर्वान् देवान् सवितारम् भगम् च । 'यः[10] खलु वै ददाति सोऽर्यमा' (तै २,३,४,१) इति ब्राह्मणम् ॥ १ ॥

सुज्योतिषः सूर्य दक्षपितॄननागास्त्वे सुमहो वीहि देवान् ।
द्विजन्मानो य ऋतसापः सत्याः स्वर्वन्तो यजता अग्निजिह्वाः ॥ २ ॥

सुऽज्योतिषः । सूर्य । दक्षऽपितॄन् । अनागाःऽत्वे । सुऽमहः । वीहि । देवान् ।
द्विऽजन्मानः । ये । ऋतऽसापः । सत्याः । स्वःऽवन्तः । यजताः । अग्निऽजिह्वाः ॥ २ ॥

स्कन्द० सूर्योऽत्र स्तूयते । सुज्योतिषः शोभनान्याहवनीयादीनि ज्योतींषि येषां ते सुज्योतिषः । यज्ञादिकर्म प्रति उत्साहिन[11] इत्यर्थः । हे सूर्य ! दक्षपितॄन् [11]दक्षाः पितरो येषां तान् । अपापान्[12] सत इत्यर्थः । हे सुमहः ! अनागास्त्वे सप्तमीनिर्देशात् सतीति वाक्यशेषः । देवान् वीहि गच्छ कामयस्व वा देवान् ईश्वरः स्तुत्यर्थं इदं रूपम् । सुष्ठु महः ! पूज्य ! वा वीहि गच्छ कामयस्व वा देवान्

---

१. प्रयत मूको. २. निवासेन मूको. ३. इष° मूको. ४. ष्याप्नु° वि॰ कपं. ५-५. नास्ति मूको. ६-६. देवमहर्ष मूको. ७. नास्ति मूको. ८. वास्ति वि॰ कपं. ९. कर्लीभा° वि॰ छ; कलिभा° कपं. १०. यो ल. ११-११. यद ... प्रत्युत्सा° मूको. १२. अपापात् मूको.

स्तोतॄन् अस्मान्। ये कीदृशाः। उच्यते—द्विजन्मानः। ये द्विजन्मानः मातुः[1] जन्म प्रथमं द्वितीयं मौञ्जीबन्धनम् इति द्विजन्मानः। ऋतसापः यज्ञे देवानां स्तोतारः।[2] सत्याः अविसंवादिनः स्वर्वन्तः स्वर्येण[3] दैवतायोग्येन हविरादिना हृष्यन्तः। यजताः यष्टारः। अग्निजिह्वाः अग्निराहवनीयः [3]जिह्वास्थानीयो यस्येत्यग्निजिह्वः यज्ञः, स येषामस्ति[3] ते अग्निजिह्वाः। आहिताग्नय इत्यर्थः॥ २॥

वेङ्कट० शोभनज्योतिष्कान् हे सूर्य! दक्षः पिता येषां देवानाम् तान् अस्माकम् अभ्युदये सुखार्थं कामयस्व, द्वयोर्लोकयोर्जायमानाः[4] ये यज्ञस्पृशो भवन्ति सत्यकर्माणः अभ्युदययुक्ताः यष्टव्याः अग्निजिह्वाः॥ २॥

उत द्यावापृथिवी क्षत्रमुरु बृहद् रोदसी शरणं सुषुम्ने।
महस्करथो वरिवो यथा नोऽस्मे क्षयाय धिषणे अनेहः॥ ३॥

उत। द्यावापृथिवी इति। क्षत्रम्। उरु। बृहत्। रोदसी इति। शरणम्। सुसुम्ने इति सुऽसुम्ने।
महः। करथः। वरिवः। यथा। नः। अस्मे इति। क्षयाय। धिषणे इति। अनेहः॥ ३॥

स्कन्द० [5]हे द्यावापृथिवी! क्षत्रम्[5] अपठितमपि बलनामैतत्। उरु[6] बहु विस्तीर्णं वा उत[7] अपि बृहत् [8]हे रोदसी! रोधस्यौ! सर्वस्य रोधस्यौ![8] शरणम् गृहम् सुसुम्ने! सुसुखे! महः महत् करथः[9] वरिवः यथा 'वरिवः' (निघ २,१०) इति धननाम। महद्धनं यथा कुरुतः, एवं क्षत्रं कुरुतमिति शेषः। कुत एतत्। अत्र शरणमिति कर्मणोः क्रियाकाङ्क्षत्वाद् यथेति चोपमानस्य साकाङ्क्षत्वाद् यथा महद्धनं दत्थः, एवं बलं गृहं च दत्तमित्यर्थः। नः अस्मभ्यम्। किमर्थम्। उच्यते—अस्मे क्षयाय क्षि[10] निवासगत्योः। अस्माकं निवासाय अस्मान् प्रति गमनाय वा देवानाम्। कथं बलवन्तो वयं गृहे निवसेमेत्येवमर्थम्। अथवा कथं बलवन्तो गृहिणश्चास्मान् यजतो देवान् गच्छेयुरित्येवमर्थमित्यर्थः। हे धिषणे! धि धारणे। धारयित्र्यौ! सर्वस्य अपापं च कुरुतम्। अथवा क्षत्रशरणयोरेवेदं विशेषणम्। अपापं बलं गृहं चैवेति॥ ३॥

वेङ्कट० अपि च द्यावापृथिव्यौ! बहु बलम् कुरुतम् तथा हे रोदसी! सुसुम्ने! महद् गृहं कुरुतम् तथा महद् धनं च कुरुथः यथा अस्माकमपेक्षितम्। किञ्च अस्मै गृहाय हे धारयित्र्यौ! अपापं च कुरुतमिति॥ ३॥

आ नो रुद्रस्य सूनवो नमन्तामद्या हूतासो वसवोऽधृष्टाः।
यदीमर्भे महति वा हितासो बाधे मरुतो अह्वाम देवान्॥ ४॥

आ। नः। रुद्रस्य। सूनवः। नमन्ताम्। अद्य। हूतासः। वसवः। अधृष्टाः।
यत्। ईम्। अर्भे। महति। वा। हितासः। बाधे। मरुतः। अह्वाम। देवान्॥ ४॥

१. नास्ति मूको. २. स्वर्येण मूको. ३-३. °स्थानीयो…स येषामस्ति मूको. ४. °यो ऽयमानाः; °योर्जायमाने वि°; °योर्जायमानाः वेषाम् क. ५-५. नास्ति मूको. ६. उत मूको. ७. नास्ति मूको. ८-८. हे रोदसी रोदसी सर्वस्य रोधक: मूको. ९. ऊः मूको. १०. यक्षि मूको.

'बहुत्ववन्ति वा, महान्ति[1] बहूनि वेत्यर्थः । कानि सामर्थ्याच्छत्रुवृन्दानि । रेजन्ते 'भ्यसते रेजते इति भयवेपनयोः' ( या ३,२१ ) । अस्मान् हन्तुं मरुत आगच्छन्तीति मन्यमानानि बिभ्यति । अथवा 'भूमा महान्ति[2] बहूनि वा अजापाणि । तानि रेजन्ते कम्पन्ते । पदकारात्तु भूम इति ह्रस्वकरणात् क्रियाविशेषणम् इदम् एकवचनान्तमिति गम्यते । तत्र स्वार्थिक इमनिच् द्रष्टव्यः । बहु रेजन्त इत्यर्थः । क । अध्वनि 'अध्वा' ( निघ १,३ ) इत्यन्तरिक्षनाम । अस्य रेजन्त इत्येतेन वा 'सम्बन्धः, याथ इत्येतेन[3] वा । अन्तरिक्षे रेजन्ते[4] अन्तरिक्षे वा यदा याथेति । कीदृशि । प्रविक्ते । [5]शुद्धोऽपि विचिरत्र विपूर्वार्थे[5] द्रष्टव्यः । प्रकर्षेण विविक्ते । शुचौ वा विस्तीर्णे वेत्यर्थः ॥ ५ ॥

वेङ्कट० सद्मच्छते येषु रुद्रस्य पत्नी मरुतां माता क्षिप्रम् देवी । सचते च यान् पूषा[6] अभ्यर्धयज्वा अभ्यर्धयन् यजतीति । श्रुत्वा हवम् मरुतः यदा गच्छथ[7], तदा भूमयः कम्पन्ते मार्गे भवद्भिः प्रविक्ते[8] । मार्गस्य प्रवेको वनस्पतीनां पृथग्भावः[9] ॥ ५ ॥

[10]इति चतुर्थाष्टके अष्टमाध्याये अष्टमो वर्गः[10] ॥

अभि त्यं वीरं गिर्वणसमर्चेन्द्रं ब्रह्मणा जरितर्नवेन ।
श्रवदिद्धवमुप च स्तवानो रासद्वाजाँ उप महो गृणानः ॥ ६ ॥

अभि । त्यम् । वीरम् । गिर्वणसम् । अर्च । इन्द्रम् । ब्रह्मणा । जरितः । नवेन ।
श्रवत् । इत् । हवम् । उप । च । स्तवानः । रासत् । वाजान् । उप । महः । गृणानः ॥ ६ ॥

स्कन्द० इन्द्रोऽत्र स्तूयते । त्यम् तम् वीरम् [11]विक्रान्तम् गिर्वणसम् गीर्भिः स्तुतिभिर्वननीयम्[11] स्तुतीनां वा[12] सम्भक्तारम् इन्द्रम् अभि अर्च अभिष्टुहि । आत्मन एवायमन्तरात्मनः प्रैषः । ब्रह्मणा[13] स्तुतिलक्षणेन हे जरितः ! स्तोतः ! नवेन अन्यैः स्तोतृभिरकृतपूर्वेण । स किं करोति । [14]उच्यते । श्रवदिद्धवमिति[14] । सच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । इत् इति पदपूरणः । चशब्दः समुच्चये । रासद इत्येतदपेक्षश्च [15]समुच्चयः । यः उप श्रवत् शृणोति[15] च हवम् आह्वानम् स्तवानः[16] स्तूयमानः उप रासत् ददाति च वाजान् [17]अन्नानि महः महान्ति गृणानः स्तूयमानः[17] ॥ ६ ॥

वेङ्कट० अभि अर्च तम् वीरम् गीर्भिर्वननीयम् इन्द्रम् ब्रह्मणा हे स्तोतः । नवेन । उप शृणोतु च[18] ह्वानम् स्तूयमानः । उप प्रयच्छतु महान्ति अन्नानि शस्यमानः ॥ ६ ॥

ओमानमापो मानुषीरमृक्तं धात तोकाय तनयाय शं योः ।
यूयं हि ष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जनित्रीः ॥ ७ ॥

---

1-1. बहुत्ववति स्थान्म[?] मूको. 2-2. भ्यसद...क्ति मूको. 3-3. 'न्धा...त्येतेन मूको. 4. रेजन्तं च अन्तरिक्षे मूको. 5-5. शुद्धेऽपि विविभविपूर्वार्थे मूको. 6. पु° मूको 7. °च्छथ क. 8. °ते मूको. 9. पृथग्भा° मूको; पृथुभा° क प्रभृतयः. 10-10. नास्ति मूको. 11-11. विक्रान्तं...स्तुतिभिर्वन° मूको. 12. वा मूको. 13. ब्रह्मणः मूको. 14-14. उच्यते...मिति मूको. 15-15. समुच्चयो योपशृणोति मूको. 16. स्तवानां मूको. 17-17. अन्नानि...मूको. 18. च न मूको.

वेङ्कट० आ गच्छतु अस्मान् देवः सविता पालयन् हिरण्यपाणिः यष्टव्यः, यः प्रातराम् उषसः इव मुखम्[1] तमांसि व्यूर्णुते[2] यजमानाय धनानि ॥ ८ ॥

उत त्वं सूनो सहसो नो अद्या देवाँ अस्मिन्नध्वरे ववृत्याः ।
स्यामहं ते सदमिद् राती तव स्यामग्नेऽवसा सुवीरः ॥ ९ ॥

उत । त्वम् । सूनो इति । सहसः । नः । अद्य । आ । देवान् । अस्मिन् । अध्वरे । ववृत्याः ।
स्याम् । अहम् । ते । सदम् । इत् । रातौ । तव । स्याम् । अग्ने । अवसा । सुवीरः ॥ ९ ॥

स्कन्द० अग्निरत्र स्तूयते । 'उत इति अप्यर्थे'[3] । त्वं-शब्दाच्च परो द्रष्टव्यः । त्वम् अपि हे सूनो ! सहसः बलस्य पुत्र ! । बलेन मथ्यमानो यज्जायते इति बलस्य पुत्र उच्यते । नः[4] अस्मान् प्रति अद्य देवान् अस्मिन् अध्वरे आ ववृत्याः[5] 'वर्तते' ( निघ २,१४ ) इति गतिकर्मा, सामर्थ्याच्चान्तर्णीतण्यर्थः । अस्यार्थे पुनःपुनर्वा आगमयेत्याशास्महे । किञ्च स्याम् अहम् अस्मदादम्[6] ते तव सदम् इत् सदैव रातौ दाने । नित्यं त्वमस्मभ्यं दया इत्यर्थः । किञ्च तव अवसा पालकेन । त्वया पाल्यमानः सन्नित्यर्थः । स्याम् अहं हे अग्ने ! सुवीरः शोभनैर्वीरैः पुत्रैः पौत्रैश्च युक्तः ॥ ९ ॥

वेङ्कट० अपि त्वम् हे सहसः सूनो ! अस्माकम् अद्य अस्मिन् यज्ञे देवान् आ वर्तय । स्याम् अहम् ते सदा एव दाने । तव स्याम् अग्ने ! रक्षणेन शोभनवीरः ॥ ९ ॥

उत त्या मे हवमा जग्म्यातं नासत्या धीभिर्युवमङ्ग विप्रा ।
अत्रिं न महस्तमसोऽमुमुक्तं तूर्वतं नरा दुरितादभीके ॥ १० ॥

उत । त्या । मे । हवम् । आ । जग्म्यातम् । नासत्या । धीभिः । युवम् । अङ्ग । विप्रा ।
अत्रिम् । न । महः । तमसः । अमुमुक्तम् । तूर्वतम् । नरा । दुःऽइतात् । अभीके ॥ १० ॥

स्कन्द० उत त्या मे इति तच्छब्दाद् यच्छब्दोऽध्याहार्यः । यौ[7] धीभिः प्रज्ञाभिः '[8]कर्मभिर्वा युक्तौ युवम्'[8] युवाम् अङ्ग क्षिप्रं हे विप्रा ! मेधाविनौ ! 'अत्रिम् न' नशब्दोऽत्रोपरिष्टादुपचार उपमार्थीयत्वात् 'अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः' ( या ७,३१ ) इति पदपूरणः । अत्रिम् असुरैरग्निकुण्डे प्रक्षिप्तम् '[9]महः महतः तमसः मृत्युलक्षणात् अमुमुक्तम् समर्थिं प्रज्ञामन्धा[10]' तत उद्धरणेन मोचितवन्तौ स्थः । तथेतदन्यत्राप्युक्तम्—'हिमेनाग्निं घ्रंसमवारयेथाम्' (ऋ १,११६,८) इति । किञ्च '[11]तूर्वतम् तूर्वतिः[11]' हिंसार्थः । हिंस्तं हे नरा ! मनुष्याकारौ ! दुरितात् द्वितीयार्थे पञ्चम्येषा । दुरितं पापमस्माकम् अभीके[12] । अभीके अन्तिके इत्यासन्नस्य ( या ३,२० ) नामनी । द्वितीयार्थे चात्र सप्तमी । आसन्नं स्वशरीरमित्यर्थः ॥ १० ॥

---

1. °त्व° मूको. 2. °र्णुते मूको. 3-3. उतेत्यप्यर्थे मूको. 4. न मूको. 5. °ऽववृत्याः मूको. 6. °दस्मान् मूको. 7. य मूको. 8-8. कर्मभिर्वा युवं मूको. 9-9. नास्ति वि°. 10-10. महतो मृत्यु°लक्षणात्···तमस° मूको. 11-11. तूर्वतं तूर्वतिः मूको. 12. अन्तिके मूको.

वेङ्कट० अपि च तौ मम हवम् आ गच्छतम् हे नासत्यौ! कर्मभिः युवाम् क्षिप्रम् मेधाविनौ!, अग्निम् इव महतः तमसः मोचितवन्तौ दह्यमानम् उपद्रवात् सङ्ग्रामे ॥ १० ॥

'इति चतुर्थाष्टके षष्ठाध्याये नवमो वर्गः' ॥

ते नो॑ रा॒यो द्यु॒मतो॒ वाज॑वतो दा॒तारो॑ भूत नृ॒वतः॑ पुरु॒क्षोः ।
द॒श॒स्यन्तो॑ दि॒व्याः पार्थि॑वासो॒ गोजा॑ता॒ अप्या॑ मृ॒ळता॑ च देवाः ॥ ११ ॥

ते । नः॒ । रा॒यः । द्यु॒ऽमतः॑ । वाज॑ऽवतः । दा॒तारः॑ । भू॒त॒ । नृ॒ऽवतः॑ । पु॒रु॒ऽक्षोः ।
द॒श॒स्यन्तः॑ । दि॒व्याः । पार्थि॑वासः । गोऽजा॑ताः । अप्याः॑ । मृ॒ळत॑ । च॒ । दे॒वाः॒ ॥ ११ ॥

स्कन्द० देवा अत्र स्तूयन्ते । ते नः अस्मभ्यम् रायः धनस्य द्युमतः स्वदीप्त्या दीप्तिमतः वाजवतः[1] अन्नसंयुक्तस्य दातारः भूत भवत । नृवतः[2] परिचारकमनुष्योपेतस्य । पुरुक्षोः बहुस्थाननिवासिनः । अत्यन्तप्रभूतस्येत्यर्थः[3] । अथवा क्षुशब्दोऽत्र कीर्तिवचनः । 'क्षुमन्तो याभिर्मदेम' ( ऋ १,१०,१२ ) इति यथा । बहुकीर्तेः बहुधा च कीर्त्यपितस्येत्यर्थः । दशस्यन्तः दातुमिच्छन्तः[4] । यदाऽस्मभ्यं दातुमिच्छथ तदा द्युमदादिगुणयुक्तं दत्त, न[5] यत्किञ्चिदित्यर्थः । दिव्याः प्रत्यक्षकृतोऽयं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । दिव्याः दिवि भवाः । दिव्या इत्यादीन्यामन्त्रितानि । पार्थिवासः 'पृथिव्यां भवाः'[6] गोजाताः सर्वगामित्वाद् गौर्जगतः प्रकृतिरात्मा ततो भवाः । अथवा स्तुतिलक्षणा वाग् गौः तया सह जाताः । जन्मन एव प्रभृति[7] स्तुत्याः जाताः । अथवा ... लोकत्रयेऽपि ये भवाः इत्यर्थः । अप्याः 'आपः' ( निघ १,३ ) इत्यन्तरिक्षनाम । तत्रभवाः ।[8] तेषु भवाः । ते नो धनस्य दातारो भवतेत्यर्थः । किञ्च मृळत च सुखयत चास्मान् हे देवाः ॥ ११ ॥

वेङ्कट० ते अस्मभ्यम् धनस्य दीप्तिमतः अन्नवतः दातारः भवत वीरवतः बहुभिः कीर्त्यमानस्य । धनानि प्रयच्छन्तः दिवि भवाः पार्थिवाश्च 'पृथिव्या अन्तरिक्षनाम्नो'[9] जाताः गोर्भूमिः सा जनकस्थानं येषां ते गोजाताः । त्रिस्थाना अपि देवा उच्यन्ते । अपि वा मारुतीयम् । गोजाताः पृश्निमातरः अप्सु[10] भवाः सुखयत अस्मान् देवाः ॥ ११ ॥

ते नो॑ रु॒द्रः सर॑स्वती स॒जोषा॑ मी॒ळ्हुष्म॑न्तो॒ विष्णु॑र्मृळन्तु वा॒युः ।
ऋ॒भु॒क्षा वाजो॒ दैव्यो॑ विधा॒ता प॒र्जन्या॒वाता॑ पिप्यता॒मिषं॑ नः ॥ १२ ॥

ते । नः॒ । रु॒द्रः । सर॑स्वती । स॒ऽजोषाः॑ । मी॒ळ्हुष्म॑न्तः । विष्णुः॑ । मृ॒ळन्तु॑ । वा॒युः ।
ऋ॒भु॒क्षाः । वाजः॑ । दैव्यः॑ । वि॒ऽधा॒ता । प॒र्जन्या॒वाता॑ । पि॒प्य॒ता॒म् । इष॑म् । नः॒ ॥ १२ ॥

स्कन्द० रुद्रादयोऽत्र [11]स्तूयन्ते । बहुवचनात् सजोषा मीळ्हुष्मन्त[11] इत्येतत्सम्बन्धी यच्छब्दोऽध्याहार्यः । सजोषाः [12]सहप्रीतयश्च ये मीळ्हुष्मन्तः[12] भवन्तश्च ते नः अस्मान् रुद्रः सरस्वती विष्णुः

1-1. नास्ति मूको. 2. दा नराः मूको. 3. नृपतः मूको. 4. मत्यन्तम्° मूको. 5. नाशाद्° मूको. 6-6. "पिप्यतरि" छ; मूको. 6. नास्ति मूको. 7-7. पार्थिवभवाः मूको. 8. प्रकृति मूको. 11-11. यच्छब्दाज्जोषमीळ्हुष्मन्त मूको. 'व्यान्तरि° छपे; व्यान्तरिक्षमतो वि°. 10. मध्ये मूको. 12-12. सहप्रीत्य ये समीन्त्युष° मूको.

इन्द्रमेते गच्छन्तु सुखयन्तु । वायुः च । 'ऋभुक्षाः' (निघ ३,३) इति महन्नाम । महान् वाजः च सुधन्वनः पुत्रः[1] दैव्यः विधाता च पर्जन्यवाता च पिन्वताम् इषम् नः स्फायी ओष्यायी वृद्धौ । वर्धयन्तु च अन्नम् अस्माकम् ॥ १२ ॥

वेङ्कट० ते अस्मान् रुद्रः सरस्वती च सङ्गताः सेचनहस्तः विष्णुः सुखयन्तु, वायुः च । तथा ऋभुक्षिश्वा च वाजः च [2]सौधन्वनाः, दैव्यः[2] विधाता चन्द्रमाः, पर्जन्यवातौ च वर्धयन्तु अस्माकम् अन्नम् ॥ १२ ॥

उत त्य देवः सविता भगो नोऽपां नपादवतु दानु पप्रिः ।
त्वष्टा देवेभिर्जनिभिः सजोषा द्यौर्देवेभिः पृथिवी समुद्रैः ॥ १३ ॥

उत । त्यः । देवः । सविता । भगः । नः । अपाम् । नपात् । अवतु । दानु । पप्रिः ।
त्वष्टा । देवेभिः । जनिऽभिः । सऽजोषाः । द्यौः । देवेभिः । पृथिवी । समुद्रैः ॥ १३ ॥

स्कन्द० सवित्रादयोऽत्र स्तूयन्ते । उत अपि त्यः सः देवः सविता भगः च नः अस्मान् अपाम् नपात् च अवतु पालयतु । अग्निरपां [3]नपादुच्यते । अद्भ्य ओषधिवनस्पतयो[3] जायन्ते, ओषधिवनस्पतिभ्य एव अग्निः इति । कीदृशः । उच्यते । दानु दानम् पप्रिः पॄ पालनपूरणयोः । साधु पालयिता अपरित्यक्ता । साधु दानानां सर्वदा दातेत्यर्थः । त्वष्टा च देवेभिः देवैः सह [4]जनिभिः तत्पत्नीभिश्च सह सजोषाः समीति.[4], द्यौः च देवैः सह, पृथिवी च समुद्रैः ॥ १३ ॥

वेङ्कट० अपि च देवः सविता भगः च अस्मान् अपाम् नपात् च रक्षतु, दाता पूरयिता त्वष्टा देवैः देवपत्नीभिश्च सङ्गतः, द्यौः च देवैः, पृथिवी च समुद्रैः सर्वाभिः ॥ १३ ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात् पृथिवी समुद्रः ।
विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥ १४ ॥

उत । नः । अहिः । बुध्न्यः । शृणोतु । अजः । एकऽपात् । पृथिवी । समुद्रः ।
विश्वे । देवाः । ऋतऽवृधः । हुवानाः । स्तुताः । मन्त्राः । कविऽशस्ताः । अवन्तु ॥ १४ ॥

स्कन्द० अहिर्बुध्न्यादयोऽत्र स्तूयन्ते । उत अपि नः अस्माकम् अहिः बुध्न्यः बुध्नम् अन्तरिक्षम्, तस्मिन् भवः शृणोतु । किम् । आह्वानम् । तुत एतत् । हुवाना इति [5]परस्माद्वचनाद् आह्वानस्य प्रकृतत्वात्[5] । न च केवलोऽहिर्बुध्न्यः[6] । किं तर्हि । अजः च एकपात्, एकः पादो यस्य स एकपात् । पृथिवी च समुद्रः च विश्वे देवाः ऋतावृधः सत्यस्य यज्ञस्य उदकस्य वा वर्धयितारः हुवानाः आहूयमानाः । स्तुत्या चाह्वानमात्रेण सन्तः स्तुताः अस्माभि

१. ना मूको. २-२. सौदेम्या यि एषे; सौदेम्याः ह; असौ दैव्यः ह प्रस्तावः. ३-३. "ते ... तयो मूको. ४-४. ज ... मूको. ५-५. परस्मा ... त्वात् मूको. ६. °लोऽहिः मूको.

स्तुषे । ऊँ इति । वः । मुहः । ऋतस्य । गोपान् । अदितिम् । मित्रम् । वरुणम् । सुऽजातान् ।
अर्यमणम् । भगम् । अदब्धऽधीतीन् । अच्छ । वोचे । सऽधन्यः । पावकान् ॥ ३ ॥

स्कन्द० अदित्यादयोऽत्र[1] स्तूयन्ते । स्तुषे व्यत्ययेनात्र मध्यमः । स्तौमि । उ इति पदपूरणः । वः युष्मान् महः महतः ऋतस्य [2]यज्ञस्य उदकस्य[2] वा गोपान् । कतमान् । अदितिम् मित्रम् वरुणम् च सुजातान् । [3]अजनं जातम्[3], शोभनं जातं येषां ते सुजाताः तान् सुजातान् । अर्यमणम् च भगम् च अदब्धसुजन्मम इत्यर्थः । न चादित्यादीनेव[4] केवलान् । किं तर्हि । अर्यमणम् च भगम् च अदब्धधीतीन् अनुपहिंसितकर्मणः । स्तुत्या च अच्छ वोचे अभिब्रवीमि इदमिदं च क्रियतां मम [5]इति । सधन्यः[5] धनं हविर्लक्षणम् अत्राभिप्रेतम् । सह धनेन सधनः [6]सहविः, सधन[6] एव सधन्यः । [7]स्वार्थिको यत् । सहविष्कः[7] सन् । यजमानेत्यर्थः । पावकान् पावकान्[8] पावयितॄन् वा मनुष्याणाम् ॥ ३ ॥

वेङ्कट० स्तौमि[9] एव युष्मान् महतः यज्ञस्य गोपायितॄन् अदित्यादीन् सुजननान्[10] । अहिंसितकर्मणः अर्यमप्रभृतींश्च अभिष्टौमि सधनान् शोधकान्[11] ॥ ३ ॥

रिशादसः सत्पतीँरदब्धान्महो राज्ञः सुवसनस्य दातॄन् ।
यूनः सुक्षत्रान्क्षयतो दिवो नॄनादित्यान्याम्यदितिं दुवोयु ॥ ४ ॥

रिशादसः । सत्ऽपतीन् । अदब्धान् । मुहः । राज्ञः । सुऽवसनस्य । दातॄन् ।
यूनः । सुऽक्षत्रान् । क्षयतः । दिवः । नॄन् । आदित्यान् । यामि । अदितिम् । दुवःऽयु ॥ ४ ॥

स्कन्द० आदित्या अदितिश्चात्र स्तूयन्ते । रिशादसः[12] रिशतान् असितॄन् । हिंसता[13] क्षेप्तॄनित्यर्थः । सत्पतीन् सतां पालयितॄन् अदब्धान्[14] अनुपहिंसितान् महः महतः राज्ञः दीप्तान् सुवसनस्य शोभनमुच्यते[15] यस्मिन् गृहे तत्सुवसनं तस्य शोभनस्य धनस्य वा दातॄन् यूनः तरुणान् [16]सुक्षत्रान् सुबलान् सुधनान्[16] वा क्षयतः गच्छतः दिवः मिश्रयितॄन् वा ख्यातेजसां सर्वस्य, किं द्युलोकात् नॄन् मनुष्यान् प्रति आदित्यान् यामि याचे यद्यदभिप्रेतम् । न च केवलान् । किं तर्हि । अदितिम् च दुवोयु व्यत्ययेनात्र नपुंसकता । दुवोयुम् परिचर्याकामाम् ॥ ४ ॥

वेङ्कट० रिशताम् असितॄन् सत्पतीन् अहिंसितान्[17] महतः राज्ञः शोभननिवासस्य गृहस्य दातॄन् यूनः सुधनान् सदा गच्छतः द्युलोकस्य नेतॄन् आदित्यान् याचे, अदितिम् च परिचर्यामिच्छन्तीम् ॥ ४ ॥

द्यौ३ष्पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृळता नः ।
विश्व आदित्या अदिते सजोषा अस्मभ्यं शर्म बहुलं वि यन्त ॥ ५ ॥

---

१. आदित्या मूको.　२-२. यज्ञस्य⋯दकस्य मूको.　३-३. जनसम्जातं मूको.　४. न चा दीनेव मूको.　५-५. ? सधन्य: मूको.　६-६. सहवः सध मूको.　७-७. सार्थको यत्सविष्कः मूको.　८. पावकान् मूको.　९. स्तौमि ल ख्यं.　१०. जेत॰ मूको.　११. शोध॰ ल ख्यं; शोध॰ वि'.　१२. नास्ति वि'॰; नास्ति अ.　१३-१३. हिंसे सतां क्षेप्तॄनित्यर्थः मूको.　१४. अदब्धान् मूको.　१५. ॰नमिष्यते मूको.　१६-१६. सुक्ष⋯सुध॰ मूको.　१७. अहिंसितान् वि' अ; अहिंसित ख्यं.

नम॒ इदु॒ग्रं नम॒ आ वि॑वासे॒ नमो॑ दाधार पृथि॒वीमु॒त द्याम् ।
नमो॑ दे॒वेभ्यो॒ नम॑ ईश एषां कृ॒तं चि॒देनो॒ नम॒सा वि॑वासे ॥ ८ ॥

नम॑: । इत् । उ॒ग्रम् । नम॑: । आ । वि॒वा॒से॒ । नम॑: । दा॒धा॒र॒ । पृ॒थि॒वीम् । उ॒त । द्याम् ।
नम॑: । दे॒वेभ्य॑: । नम॑: । ई॒शे॒ । ए॒षा॒म् । कृ॒तम् । चि॒त् । एन॑: । नम॑सा । आ । वि॒वा॒से॒ ॥८॥

स्कन्द० नमस्त्र स्तूयते । 'नम.' ( निघ २,७ ) इत्यन्ननाम । इत्, इति पदपूरणः । नमः अन्नम् उग्रम् यो भारयितव्यस्तस्योपरि कृतम् । नमः आ विवासे विवासतीति परिचारणकर्मा ( द्र. निघ ३,५ ) आशंसायां[1] वा । अन्नं परिचारयामि अन्नमाशंसे वा । नमः दाधार पृथिवीम् उत द्याम् । नमः देवेभ्यः तादर्थ्ये एषा चतुर्थी । 'हविर्लक्षणमन्नं यत्तत् देवार्थमेव' । न च तदर्थमेव केवलम् । किं तर्हि । नमः ईशे ईष्टे एषाम् देवानाम् । [2]कृतम् चित् एनः[3] कृतमपि पापमात्मनः [4]नमसा अन्नेन आ विवासे विवासयितिरिह[5] सामर्थ्यान्नाशनार्थः । नाशयामि ॥ ८ ॥

वेङ्कट० अन्नम् एव उद्गूर्णम् । अहं[6] च अन्नमेव परिचरामि । नमः दाधार पृथिवीम् अपि च द्याम्[1] । नम एव देवेभ्यः नीयते । नमः एव सर्वेषाम् ईष्टे । तेनान्नेन नमसा कृतम् चित् एनः अहं परिचरामि । न निन्दामीति स्तुतिरन्नस्य ॥ ८ ॥

ऋ॒तस्य॑ वो र॒थ्य॑: पू॒तद॑क्षानृ॒तस्य॑ पस्त्य॒सदो॒ अद॑ब्धान् ।
ताँ आ नमो॑भिरुरु॒चक्ष॑सो॒ नॄन्विश्वा॑न्व॒ आ न॑मे म॒हो य॑जत्राः ॥ ९ ॥

ऋ॒तस्य॑ । वः॒ । र॒थ्य॑: । पू॒तऽद॑क्षान् । ऋ॒तस्य॑ । प॒स्त्य॒ऽसद॑: । अद॑ब्धान् ।
तान् । आ । नम॑:ऽभिः । उ॒रु॒ऽचक्ष॑सः । नॄन् । विश्वा॑न् । वः॒ । आ । न॒मे॒ । म॒हः॒ । य॒ज॒त्राः॒ ॥ ९ ॥

स्कन्द० वरुणादयो द्यावापृथिव्योरन्तःस्थाः[7] स्तूयन्ते । ऋतस्य यज्ञस्य वः युष्माकं स्वभूतस्य रथ्यः रथीशब्दः[8] सारथिवचन । इह तु 'प्रेरकत्वसामान्यात् प्रेरयितृवचनः । प्रेरकान् । पूतदक्षान्[9] शुद्धबलान् ऋतस्य पस्त्यसदः पस्त्यमिति गृहनाम । यज्ञस्य सम्बन्धिषु गृहेषु सदोहविर्धानादिषु सन्नान् अदब्धान्[10] अनुपहिंसितान् । तान् इति [11]तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । ये एवंविधास्तान् । आकारस्तु पदपूरणः[12] । नमोभिः नमस्कारैः । उरुचक्षसः विस्तीर्णदर्शनान् बहुदर्शनान् वा नॄन् मनुष्याकारान् विश्वान् वः[13] युष्मान् च आ नमे महः महतो हे [14]यजत्राः यष्टव्याः[15] । अथवाऽऽकारस्योपसर्गस्य द्विश्रुतेरेकामन्यस्य[16] ये युष्मदीयस्य यज्ञस्य[17] प्रणेतारो यजमानाः ये यज्ञगृहसादिनः ऋत्विजः तान् नरान् ॥ ९ ॥

१. शंसायां मूको. २-२. अन्नं... इदार्थे° मूको. ३-३. कृतमपिदेनः मूको. ४-४. नमसा... विवासति° मूको. ५. अथ विं' कपं. ६. अन् मूको. ७. °योस्सुचोः मूको. ८. रश्मिशब्दः मूको. ९-९. 'मान्यात्... उत दक्षान् मूको. १०. अदब्धान् मूको. ११-११. °च्छोदम्... स्तु पदपू° मूको. १२. वा मूको. १३-१३. यजत्रा ... ... भूतो मूको. १४. °भूतैकस्य° मूको. १५. मर्त्यस मूको.

वेङ्कट० यजत्या वः उक्षेतृन्[1] शुद्धयज्ञान् यज्ञार्हान्[2] गृहेषु सीदतः अहिंसितान् तान् वः हविर्भिः व्याप्तदर्शनान् नेतॄन् सर्वान् परिचरामि महतः हे यजत्याः[3] ॥ ९ ॥

ते हि श्रेष्ठवर्चसस्त उ नस्तिरो विश्वानि दुरिता नयन्ति ।
सुक्षत्रासो वरुणो मित्रो अग्निर्ऋतधीतयो वक्मराजसत्याः ॥ १० ॥

ते । हि । श्रेष्ठऽवर्चसः । ते । ऊँ इति । नः । तिरः । विश्वानि । दुःऽइता । नयन्ति ।
सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः । ऋतऽधीतयः । वक्मराजऽसत्याः ॥ १० ॥

स्कन्द० हि-शब्दः पदपूरणः । ते प्रकृताः श्रेष्ठवर्चसः वर्चोऽन्नं दीप्तिर्वा । प्रशस्यतमान्नाः[4] प्रशस्यतमदीप्तयो वा । ते उ नः उकारोऽत्र पूर्वार्थे । [5]त एव अस्माकम् विश्वानि दुरिता तिरः[5] नयन्ति [6]तिर इत्यन्तर्धौ[6] । अन्तर्धाने नयन्ति । अपनयन्तीत्यर्थः सुक्षत्रासः सुबलाः सुधनाः वा वरुणः मित्रः अग्निः इत्येते [7]ऋतधीतयः सत्यप्रज्ञाः[7] सत्यकर्माणो वा वक्मराजसत्याः वक्म वचनं [8]स्तुतिः तस्या राजा ईश्वरः स्तोता स सत्यः[8] अविसंवादी येषां ते वक्मराजसत्याः । स्तोतृभिः सदा स्तुता इत्यर्थः ॥ १० ॥

वेङ्कट० ते खलु श्रेष्ठदीप्तयः ते एव अस्माकम्[9] विश्वानि दुरितानि तिरः नयन्ति सुबलाः वरुणः मित्रः अग्निः सत्यकर्माणः वक्मेन[10] ये राजन्ते ते स्तोतारो वक्मराजानस्ते[11] सत्या येषु ते तथोक्ता इति ॥ १० ॥

[12]इति चतुर्थाष्टके अष्टमाध्याये द्वादशो वर्गः[12] ॥

ते न इन्द्रः पृथिवी क्षाम वर्धन्पूषा भगो अदितिः पञ्च जनाः ।
सुशर्माणः स्ववसः सुनीथा भवन्तु नः सुत्रात्रासः सुगोपाः ॥ ११ ॥

ते । नः । इन्द्रः । पृथिवी । क्षाम । वर्धन् । पूषा । भगः । अदितिः । पञ्च । जनाः ।
सुऽशर्माणः । सुऽअवसः । सुऽनीथाः । भवन्तु । नः । सुऽत्रात्रासः । सुऽगोपाः ॥ ११ ॥

स्कन्द० इन्द्रादयो द्वयोरनयोरत्र स्तूयन्ते । ते नः अस्मान् इन्द्रः पृथिवी अन्तरिक्षनामैतत् (निघ १,३) । अन्तरिक्षम् क्षाम पृथिवी वर्धन् वर्धयन्तु । पूषा भगः अदितिः पञ्च जनाः । उच्यन्ते — ब्राह्मणक्षत्रियविट्शूद्र-निषादपञ्चमाः चत्वारो वर्णाः पञ्चजना उच्यन्ते । कीदृशाः । उच्यन्ते — सुशर्माणः ब्राह्मणः सुसुखाः स्ववसः शोभनवासाः सुनीथाः प्रशस्याः । श्रुतेर्यच्छब्दोऽध्याहर्तव्यः । ये सुशर्माणः सुसुखाः स्ववसः शोभनवासाः सुनीथाः प्रशस्याः । किञ्च भवन्तु नः अस्माकम् सुत्रात्रासः सुष्ठु त्रातारः सुगोपाः सुष्ठु च गोप्तारः गोपायितारः । भयात्राणं गोपायनम् । [13]तेन सुत्रात्रास[13] [14]इत्यनेन न पौनरुक्त्यम्[14] ॥ ११ ॥

---

1. यजत्या मूको. 2. नेतृन् ल प्रस्तावः. 3. यजत्या मूको. 4. प्रशस्यतमान्नाः मूको. 5-5. एव ··· तिरो मूको. 6-6. तिर ··· र्धौ मूको 7-7. °तया सत्यस्य प्रज्ञाः मूको 8-8. स्तुतिः ··· शीता सत्यस्य मूको. 9. अस्मान् मूको. 10. पर्वेण ल वर्पं. 11. 'जन° मूको. 12-12. नास्ति मूको. 13-13. ते सु° मूको. 14-14. °नेन पौनरुक्त्यम् मूको.

अपि पन्थामगन्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥१६॥

अपि । पन्थाम् । अगन्महि । स्वस्तिऽगाम् । अनेहसम् ।
येन । विश्वाः । परि । द्विषः । वृणक्ति । विन्दते । वसु ॥ १६ ॥

स्कन्द० अपि पन्थाम् पन्थानमपि आगन्महि स्वस्तिगाम् [1]भवत्प्रसादेन अविनाशगमनम्[1] अनेहसम् अपापम् । सर्वपापवर्जितमित्यर्थः । येन । [2]तृतीयया गच्छन्निति वाक्यशेषः[2] । विश्वाः द्विषः सर्वान् द्विषः परि वृणक्ति परिवर्जयति । भवत्प्रसादेन विन्दते लभते च वसु धनं रम्यम् ॥ १६ ॥

वेङ्कट० पन्थानम् अपि अगन्महि[3] प्राप्नुम स्वस्त्येः प्रापयितारम् अनेहसम् येन पथा विश्वाः[4] द्विषः परि वृणक्ति पथिकः विन्दते च धनम् ॥ १६ ॥

[5]इति चतुर्थाष्टके अष्टमाध्याये त्रयोदशो वर्गः[5] ॥

[ ५२ ]

[6]ऋजिश्वा भारद्वाज ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः, सप्तम्यादिद्वादशान्ता गायत्र्यः, चतुर्दशी जगती[6] ।

न तद् दिवा न पृथिव्यानु मन्ये न यज्ञेन नोत शमीभिराभिः ।
उब्जन्तु तं सुभ्वः पर्वतासो नि हीयतामतियाजस्य यष्टा ॥ १ ॥

न । तत् । दिवा । न । पृथिव्या । अनु । मन्ये । न । यज्ञेन । न । उत । शमीभिः । आभिः ।
उब्जन्तु । तम् । सुऽभ्वः । पर्वतासः । नि । हीयताम् । अतिऽयाजस्य । यष्टा ॥ १ ॥

स्कन्द० तदिति व्यत्ययेन नपुंसकता । तच्छन्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः यमिति । न तत् दिवा न पृथिव्या । तृतीयाश्रुतेः सम्बन्धमिति वाक्यशेषः । अनु मन्ये अनुजानामि । इच्छामीत्यर्थः । कीदृशः पुनर्दिवा पृथिव्या वा सम्बन्धोऽत्र यो नेष्यते । उच्यते— मृतस्य सतो [7]देवशरीरस्य मनुष्यशरीरस्य[7] वा सम्बन्धः । यस्माच्छरीरं पृथिव्यं स पृथिव्या अतो नेष्यते । मृतं सन्तं देवशरीरं मनुष्यशरीरं वा प्राप्नुवन्तम् । तन्नेच्छामीत्यर्थः । जीवन्तमपि न यज्ञेन सम्बन्धम् अनुमन्ये, न अपि शमीभिः आभिः ··· ··· ॥ १ ॥

वेङ्कट० न तत् कर्म द्यावापृथिवीभ्याम् [8]अहम् अनु[8] मन्ये । सफलं कुरुतं द्यावापृथिव्यौ तत्कर्मेत्यर्थः । न च यज्ञेन, न अपि[9] शमीभिः आभिः । तम् इमम् अतियाजे महद्भ्यश्शुभम् महान्तः पर्वताः उब्जन्तु । हन्ततिर्वधकर्मा[10] । निहीनो भवतु अतियाजस्य[11] यष्टा पाप्मयुः ॥ १ ॥

अति वा यो मरुतो मन्यते नो ब्रह्म वा यः क्रियमाणं निनित्सात् ।
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषमभि तं शोचतु द्यौः ॥ २ ॥

---

१-१. भवत्प्रसादेनापि भाग° मूको. २-२. तृतीय ··· वाक्य° मूको. ३. गन्म° द्र. ४. विश्वान् द्रपं. ५-५. नास्ति मूको. ६-६. यच्छन्दो ··· ति मूको. ७-७. °शरीर ··· वा मूको. ८-८. अहमनु मूको. ९. °र्णा मूको. १०. ति वि° द्रपं; अरि द्र. ११. °कर्मणा मूको. १२. हन्ति° त्र द्रपं.

अति । वा । यः । मरुतः । मन्यते । नः । ब्रह्म । वा । यः । क्रियमाणम् । निनित्सात् ।
तपूंषि । तस्मै । वृजिनानि । सन्तु । ब्रह्मऽद्विषम् । अभि । तम् । शोचतु । द्यौः ॥ २ ॥

स्कन्द० ... ... ... ... ... ॥ २ ॥

वेङ्कट० यः वा अस्मान् हे मरुतः! अति मन्यते, कर्म वा अस्माभिः क्रियमाणम् यः निन्दितु-मिच्छति[1] । तस्मै रक्षांसि छेदकानि भवन्तु कर्मणा ॥ २ ॥

किम॒ङ्ग त्वा॒ ब्रह्म॑णः सोम गो॒पां किम॒ङ्ग त्वा॑हुरभिशस्ति॒पां नः॑ ।
किम॒ङ्ग नः॑ पश्यसि नि॒द्यमा॑नान् ब्रह्म॒द्विषे॒ तपु॑षिं हे॒तिम॑स्य ॥ ३ ॥

किम् । अ॒ङ्ग । त्वा॒ । ब्रह्म॑णः । सो॒म॒ । गो॒पाम् । किम् । अ॒ङ्ग । त्वा॒ । आ॒हुः॒ । अ॒भि॒श॒स्ति॒ऽपाम् । नः॒ ।
किम् । अ॒ङ्ग । नः॒ । प॒श्य॒सि॒ । नि॒द्यमा॑नान् । ब्र॒ह्म॒ऽद्विषे॑ । तपु॑षिम् । हे॒तिम् । अ॒स्य॒ ॥ ३ ॥

स्कन्द० ... ... ... ... ... ॥ ३ ॥

वेङ्कट० पीड्यमानान् । कर्मद्विषे तापयितारम् वज्रम् प्रेरय ॥ ३ ॥

अव॑न्तु॒ मामु॒षसो॒ जाय॑माना॒ अव॑न्तु॒ मा॒ सिन्ध॑वः॒ पिन्व॑मानाः ।
अव॑न्तु॒ मा॒ पर्व॑तासो ध्रु॒वासोऽव॑न्तु मा पि॒तरो॑ दे॒वहू॑तौ ॥ ४ ॥

अव॑न्तु । माम् । उ॒षसः॑ । जाय॑मानाः । अव॑न्तु । मा॒ । सिन्ध॑वः । पिन्व॑मानाः ।
अव॑न्तु । मा॒ । पर्व॑तासः । ध्रु॒वासः॑ । अव॑न्तु । मा॒ । पि॒तरः॑ । दे॒वऽहू॑तौ ॥ ४ ॥

स्कन्द० ... ... ... ... ... ॥ ४ ॥

वेङ्कट० रक्षन्तु माम् उषसः प्रादुर्भवन्त्यः । रक्षन्तु माम् नद्यः वहन्त्यः । रक्षन्तु माम् पर्वताः स्थिराः । रक्षन्तु माम् पितरः च यज्ञे ॥ ४ ॥

वि॒श्वदा॒नीं सु॒मन॑सः स्याम॒ पश्ये॑म॒ नु सूर्य॑मु॒च्चर॑न्तम् ।
तथा॑ कर॒द् वसु॑पति॒र्वसू॑नां दे॒वाँ ओहा॑नोऽव॒सागमि॑ष्ठः ॥ ५ ॥

वि॒श्वऽदा॒नीम् । सु॒ऽमन॑सः । स्या॒म॒ । पश्ये॑म । नु । सूर्य॑म् । उ॒त्ऽचर॑न्तम् ।
तथा॑ । क॒र॒त् । वसु॑ऽपतिः । वसू॑नाम् । दे॒वान् । ओहा॑नः । अव॑सा । आऽग॑मिष्ठः ॥ ५ ॥

स्कन्द० ... ... ... ... ... ॥ ५ ॥

वेङ्कट० सर्वदा वयम् सुमनसः स्याम, पश्येम च सूर्यम् उद्गच्छन्तम् । तथा करोतु वसुपतिः अग्निः देवान् आवहन् रक्षणार्थम् अतिशयेनाऽऽगन्ता[2] ॥ ५ ॥

[3]इति चतुर्थाष्टके अष्टमाध्याये चतुर्दशो वर्गः[3] ॥

1. तन्द° मूको. २. °न ह° वि' स्पे. ३-३. नास्ति मूको.

इन्द्रो नेदिष्ठमवसागमिष्ठः सरस्वती सिन्धुभिः पिन्वमाना ।
पर्जन्यो न ओषधीभिर्मयोभुरग्निः सुशंसः सुहवः पितेव ॥ ६ ॥

इन्द्रः । नेदिष्ठम् । अवसा । आऽगमिष्ठः । सरस्वती । सिन्धुऽभिः । पिन्वमाना ।
पर्जन्यः । नः । ओषधीभिः । मयःऽभुः । अग्निः । सुऽशंसः । सुऽहवः । पिताऽइव ॥ ६ ॥

स्कन्द० ... ... ... ... ... ॥ ६ ॥

वेङ्कट० इन्द्र अस्माकम् रक्षणार्थम् नेदिष्ठम् अतिशयेनाऽऽगन्ता अस्तु । सरस्वती च उदकैः वर्धन्त्यस्तु[1] । पर्जन्यः च अस्माकम् ओषधीभिः सुखस्य भावयिता अग्निः च शोभनशंसः[2] स्वाह्वानः अस्तु[3] पिता इव ॥ ६ ॥

विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥ ७ ॥

विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् । आ । इदम् । बर्हिः । नि । सीदत ॥ ७ ॥

स्कन्द० ... ... ... ... ... ॥ ७ ॥

वेङ्कट० हे विश्वे देवाः! आ गच्छत, शृणुत च मम इदम् आह्वानम् । इदम् बर्हिः आ नि सीदत ॥ ७ ॥

यो वो देवा घृतस्नुना हव्येन प्रतिभूषति । तं विश्व उप गच्छथ ॥ ८ ॥

यः । वः । देवाः । घृतऽस्नुना । हव्येन । प्रतिऽभूषति । तम् । विश्वे । उप । गच्छथ ॥ ८ ॥

स्कन्द० ... ... ... ... ... ॥ ८ ॥

वेङ्कट० यः युष्मान् हे देवाः! घृतप्रस्राविणा हविषा परिचरति, तम् सर्वे एव उप गच्छथ ॥ ८ ॥

उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये । सुमृळीका भवन्तु नः ॥ ९ ॥

उप । नः । सूनवः । गिरः । शृण्वन्तु । अमृतस्य । ये । सुऽमृळीकाः । भवन्तु । नः ॥ ९ ॥

स्कन्द० ... ... ... ... ... ॥ ९ ॥

वेङ्कट० ते[4] उप शृण्वन्तु अस्माकम् स्तुतीः, अमृतस्य प्रजापतेः ये सूनवः भवन्ति । सुष्ठु सुखयितारश्च अस्माकम् भवन्तु ॥ ९ ॥

विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः ॥ १० ॥

विश्वे । देवाः । ऋतऽवृधः । ऋतुऽभिः । हवनऽश्रुतः । जुषन्ताम् । युज्यम् । पयः ॥ १० ॥

स्कन्द० ... ... ... ... ... ॥ १० ॥

---

१. मह° मूको; महापयस्तु ल प्रस्ताय°. २. °नर्दा क्ष स्प. ३. स्वाह्वानोस्तु मूको. ४. नास्ति मूको.

वेङ्कट० विश्वे देवाः यज्ञस्य वर्धयितारः स्वेषु कालेषु आह्वानस्य श्रोतारः सेवन्ताम् योग्यम् ओषधीनाम् पयः सारम् अन्नभूतम्[1] ॥ १० ॥

[2]इति चतुर्थाष्टके अष्टमाध्याये पञ्चदशो वर्गः[3] ॥

स्तोत्रमिन्द्रो मरुद्गणस्त्वष्टृमान् मित्रो अर्यमा । इमा हव्या जुषन्त नः ॥ ११ ॥

स्तोत्रम् । इन्द्रः । मरुत्ऽगणः । त्वष्टृऽमान् । मित्रः । अर्यमा । इमा । हव्या । जुषन्त । नः ॥

स्कन्द० ... ... ... ... ...अर्यमा, च इमा हव्या इमानि हवींषि जुषन्त सेवन्ताम् नः अस्माकं स्वभूतानि ॥ ११ ॥

वेङ्कट० स्तोत्रम् इन्द्रः मरुद्गणः त्वष्ट्रा युक्तः[4] मित्रः अर्यमा च इमानि[5] हवींषि सेवन्ताम् अस्माकम् ॥ ११ ॥

इमं नो अग्ने अध्वरं होतर्वयुनशो यज । चिकित्वान् दैव्यं जनम् ॥ १२ ॥

इमम् । नः । अग्ने । अध्वरम् । होतः । वयुनऽशः । यज । चिकित्वान् । दैव्यम् । जनम् ॥ १२ ॥

स्कन्द० आग्नेयेयम् । इमम् नः हे अग्ने ! अध्वरम् यज्ञं हे होतः ! देवानाम् आह्वातः ! वयुनशः 'वयुनम्' (निघ ३,९) इति प्रज्ञानाम । यथा यद् प्रज्ञातं तेनतेन यज । यथायथा यष्टुं जानासि तथातथा यजेत्यर्थः । चिकित्वान् जानन् दैव्यम् जनम् देवेषु भवं जनम् । यो देवो यथा 'यष्टव्यः तं' तथा जानन्नित्यर्थः ॥ १२ ॥

वेङ्कट० इमम् नः अग्ने ! यज्ञम् होतः ![6] प्रज्ञानेन यज जानन्[7] दैव्यम् जनम् ॥ १२ ॥

विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ १३ ॥

विश्वे । देवाः । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे । ये । उप । द्यवि । स्थ ।
ये । अग्निऽजिह्वाः । उत । वा । यजत्राः । आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥ १३ ॥

स्कन्द० सर्वं एवात्र देवाः स्तूयन्ते । विश्वे देवाः सर्वे[8] देवा इन्द्रादयः शृणुत इमम् हवम् मे, ये कीदृशाः ? ये अन्तरिक्षे, ये उप द्यवि स्थ । पञ्चम्यर्थे एषा सप्तमी । दिवः समीपे स्थ । ये अग्निजिह्वाः अग्निर्जिह्वास्थानीयो येषां ते अग्निजिह्वाः । अग्नौ हि प्रक्षिप्तं हविः देवा उच्यते । ये अग्निजिह्वाः उत वा यजत्राः उतशब्दोऽप्यर्थे वाशब्दश्चार्थे । अग्नावपि, अतः स तेषां जिह्वास्थानीयः । उत वा यजत्राः अपि च यष्टव्याः । मादयध्वमित्यर्थः । यूयम् आगताः सन्तः आसद्य उपविश्य अस्मिन् बर्हिषि मादयध्वम् तर्पयतात्मानम्[9] ॥ १३ ॥

वेङ्कट० हे विश्वे देवाः ! शृणुत इमम् हवम् मे, ये यूयम् अन्तरिक्षे उप सदथ, ये च दिवि, ये अग्निजिह्वाः, अपि च यष्टव्याः, ते सर्वे अस्मिन् बर्हिषि आसद्य मोदध्वम् ॥ १३ ॥

---

१. अन्नम् अन्न[०] मूको. २-३. नास्ति मूको. ३. हा[०] मूको. ४. °नि च ति[०] दर्प. ५-५. ते··· ६. ··· मूको. ६-६. °र्थ मूको. ७. रो मूको. ८. मानन् मूको. ९-९. 'ते···सर्वे' मूको. १०. तर्पयता प्रज्ञानं मूको. मानम् मूको.

सूक्तेन स्तोमवचनेन स्तवेन महा महता च नमसा अन्नेन हविर्लक्षणेन आ विवासे परिचरामि अहम् । एतत् ज्ञात्वा अस्मिन् नः अस्माकं 'स्वभूते अद्य' विदथे यज्ञे यजनाः! विश्वे सर्वे यूयं हे देवाः! हविषि तृतीयार्थे सप्तम्येषा । हविषा मादयध्वम् सर्वयज्ञास्मानम्' ॥ १७ ॥

वेङ्कट० निगदसिद्धा इति[1] ॥ १७ ॥

'इति चतुर्थाष्टके अष्टमाध्याये षोडशो वर्गः' ॥

## [ ५३ ]

'भरद्वाजो बार्हस्पत्य ऋषिः । पूषा देवता । गायत्री छन्दः, अष्टम्यनुष्टुप्' ।

वयमु त्वा पथस्पते रथं न वाजसातये । धिये पूषन्नयुज्महि ॥ १ ॥

वयम् । ऊँ इति । त्वा । पथः । पते । रथम् । न । वाजऽसातये । धिये । पूषन् । अयुज्महि ॥१॥

स्कन्द० अत ऊर्ध्वम् अमितऋषेर्भरद्वाजस्यैवार्षम् । "पौष्णीरातृतीयात्" षट्' पौष्णानि षडेतानि सूक्तानि । पूषदेवत्यानि । वयम् उ । उ इति पदपूरणः । त्वा पथः पते! अध्वनः स्वामिन्! । अध्वनि 'मनुष्याणां गच्छतां पूषा' रक्षिता । तेनायं पथस्पतिरुच्यते । रथम् न वाजसातये । यथा कश्चित् सङ्ग्रामेऽन्यत्र वा रथम् अन्नसम्भजनाय, एवं त्वाम् धिये कर्मणे । आत्मीयस्य यागकर्मणः सम्भजनार्थमित्यर्थः । अथवा धीरिति प्रज्ञानाम । आत्मनः "प्रज्ञायै । पूषन्!" अयुज्महि युजिरत्रान्तर्णीतण्यर्थः । युजोऽपि सोपसर्गार्थे द्रष्टव्यः । उपयोजयामः मेलयाम इत्यर्थः ॥ १ ॥

वेङ्कट० भरद्वाजः । वयम् उ त्वा हे पथः पते! रथम् इव अन्नभजनाय कर्मणे पूषन्! युक्तं कुर्मः ॥ १ ॥

अभि नो नर्यं वसु वीरं प्रयतदक्षिणम् । वामं गृहपतिं नय ॥ २ ॥

अभि । नः । नर्यम् । वसु । वीरम् । प्रयतऽदक्षिणम् । वामम् । गृहऽपतिम् । नय ॥ २ ॥

स्कन्द० अभीत्युपसर्गो नयेत्याख्यातेन सम्बन्धयितव्यः । नः व्यत्ययेनैव बहुवचनम् । माम् नर्यम् 'वसु नृभ्यो हितं धनम् । वीरमित्यादीनि माम् इत्येतेन' समानाधिकरणानि । 'वीरयति शत्रूनिति वीरस्तम्, वीरम् रणे' शूरम् माम् प्रयतदक्षिणम् दत्तदक्षिणं च वामम् 'वामः' ( निघ ३,८ ) इति प्रशस्यनाम । प्रशस्यं च गृहपतिम् यज्ञगृहस्य स्वामिनम् । षष्ठ्यर्थे "चेत्यर्थः । आत्मनः" प्रशस्यम् वा वसु "गृहपतिम् अभि नय" प्रापय । देहि मह्यमित्यर्थः ॥ २ ॥

वेङ्कट० अभि नय अस्मान् गृहिणम् वसु[12] शत्रूणां प्रेरकम्[13] प्रयतदक्षिणम्[14] । आढ्यो हि प्रयच्छति पश्चात् भजनीयं पर्याप्तम् ॥ २ ॥

अदित्सन्तं चिदाघृणे पूषन् दानाय चोदय । पणेश्चिद् वि म्रदा मनः ॥३॥

---

1. इत अथ मूको. 2. 'तस्मात् मूको. 3. नास्ति वि॰ छपे. 4-4. नास्ति मूको. 5-5. आत्मी॰ मूलोयात् मूको. 6-6. मनु··· पूषा मूको. 7-7. प्र··· पूषन् मूको. 8-8. वसु इ··· इत्येतेन मूको. 9-9. इति ··· रणे मूको. 10-10. चेत्य··· आत्मनः मूको. 11-11. गृह···नित्य मूको. 12. धनं वि॰ छप. 13. 'कारुक छपे. 14. दक्षिणम् मूको.

अदित्सन्तम् । चित् । आघृणे । पूषन् । दानाय । चोदय । पणेः । चित् । वि । म्रद । मनः ॥३॥

स्कन्द० अदित्सन्तम् चित् अदातुमिच्छन्तम् अपि बलात् हे आघृणे ! घृणिः क्षरिता दशः पूर्णो दतिः स कक्षे वा रथे वा आसक्तो यस्य स आघृणिः । यथा 'दृतेरिव' तेऽवृकमस्तु सख्यम्' (ऋ ६,४८,१८) इति । अथवा घृणिर्दीप्तिः, सा आगता उपजाता यस्य स आघृणिः, तस्य सम्बोधनम् हे आघृणे ! पूषन् ! दानाय अस्मभ्यम् चोदय । पणेः चित् वणिजः अपि वि म्रद विविधं मृदूकुरु । अदानशीलस्य दानाभिमुखं कुर्वित्यर्थः । मनः चित्तम् ॥ ३ ॥

वेङ्कट० अदित्सन्तम् अपि आगतदीप्ते ! पूषन् ! 'दानाय अस्मभ्यम्' चोदय पणेः अपि मनः मृदू-कुरु दानाय ॥ ३ ॥

वि पथो वाजसातये चिनुहि वि मृधो जहि । साधन्तामुग्र नो धियः ॥ ४ ॥

वि । पथः । वाजऽसातये । चिनुहि । वि । मृधः । जहि । साधन्ताम् । उग्र । नः । धियः ॥४॥

स्कन्द० 'वीत्यतस्य चिनुहीत्येतेन' सम्बन्धः । वि चिनुहि पथः मार्गान् । चोरादिः पथोऽपनेतव्य· स्वदि चितेन' यथा गत्वा तेतम् अपनयेत्यर्थः । किमर्थम् । वाजसातये अन्नस्य सम्भजनार्थम् अस्माकम् । सुखमन्नं भजामहे इत्यर्थः । वि मृधः जहि विविधं जहि मृधः सङ्ग्रामकारिणः । अस्मार्थम् गतैरस्माभिः सह ये सङ्ग्रामं चिकीर्षन्ति तानपि विनाशयेत्यर्थः । साधन्ताम् सिध्यन्तु हे उग्र ! पथिमुषाम् उपरि क्रूर ! अप्रसह्य ! वा सर्वस्य नः अस्माकम् धियः प्रज्ञाः । अभिलाषा इत्यर्थः ॥ ४ ॥

वेङ्कट० वि चिनुहि मार्गान् अन्नलाभाय । वि जहि च शत्रून् । साधयन्तु अस्माकम् कर्माणि उद्गूर्ण ! सिध्यन्तु वेति ॥ ४ ॥

परि तृन्धि पणीनामारया हृदया कवे । अथेमस्मभ्यं रन्धय ॥ ५ ॥

परि । तृन्धि । पणीनाम् । आरया । हृदया । कवे । अथ । ईम् । अस्मभ्यम् । रन्धय ॥ ५ ॥

स्कन्द० परि तृन्धि । तृदिर्हिंसार्थः । सर्वतो हिन्धि । विध्येत्यर्थः । पणीनाम् वणिजाम् 'अयज्व-नाम् । केन । आरया' तोत्रस्याग्रे तीक्ष्णो लोहकीलक आरेत्युच्यते । तया हृदया हृदयानि । हे कवे ! । अथ अनन्तरं स्वम्' एनान् अयज्वनां वणिजाम् आरया हृदये विध्येत्यर्थः । अस्मभ्यम् अस्माकम् रन्धय वशं नय ॥ ५ ॥

वेङ्कट० विलिख पणीनाम्[१०] अष्ट्र्या हृदयानि कवे ! । अथ एनान् अस्मभ्यम् वशीकुरु ॥ ५ ॥

॥ इति चतुर्थाष्टके अष्टमाध्याये सप्तदशो वर्गः[११] ॥

वि पूषन्नारया तुद पणेरिच्छ हृदि प्रियम् । अथेमस्मभ्यं रन्धय ॥ ६ ॥

---

१-१. स···र्येति मूको. २. आदान' मूको. ३-३. दानाय' ल रुपं. ४. पशु कु' ल रुपं, ५-५. त्र···र्थेति मूको. ६. स्वाहितेन ('न वि') मूको. ७. विति मूको. ८-८. अव सद कु' वि'. ७-७. वीत्ये···त्यनेव मूको. ६. ···स्वा मूको. ९. क मूको. १०. पणीं' वि' रुपं. ११-११. नास्ति मूको.

रज्जुर्वा कक्ष्यालक्षणा अभीशुलक्षणा वा । गोओपशा गोशब्देनात्र गमनाद् अजाः पूष्णोऽश्वा उच्यन्ते । ओपशेति[1] छन्दोरूपम् । शीङोऽत्र स्थानमर्थः, आमाशयो पक्वाशयः इत्यत्र यथा । न भिन्नभिन्नम् उपगम्य[2] शयनमिति ...... गन्तॄन् अजान् उपगम्य या तिष्ठति सा गोओपशा । भारं हि चोदयन्ती रज्जुर्वा कक्ष्यालक्षणा अभीशुलक्षणा वा [3]अजानां शरीरे[3] तिष्ठति । अथवा या गा उपगम्य प्राप्य शेते[4] सा गोओपशा । गवामजानां[5] सुखकरीत्यर्थः । हे आघृणे । पशुसाधनी पशूनां साधयित्री । स्तोतृभ्यो ददातीत्यर्थः । तस्याः ते तव स्वभूतायाः सकाशात् सुम्नम् सुखम्[6] ईमहे याचामहे ॥ ९ ॥

वेङ्कट० "ओपशशब्दम् उपदेशनमित्याहुः", उपविश्यमाना गावो यस्या विशन्ते सा, या तव आघृणे, कष्ट्रा पशुसाधनी भवति । तस्याः तव स्वभूतायाः सुखं[7] याचामहे ॥ ९ ॥

उत नो गोषणिं धियमश्वसां वाजसामुत । नृवत् कृणुहि वीतये ॥ १० ॥

उत । नः । गोऽसनिम् । धियम् । अश्वऽसाम् । वाजऽसाम् । उत । नृऽवत् । कृणुहि । वीतये ॥ १० ॥

स्कन्द० उत अपि च नः अस्माकम् गोषनिम् गवां सम्भक्त्रीम् । गोसम्बद्धामित्यर्थः[8] । धियम् प्रज्ञाम् अश्वसाम् अश्वानामपि सम्भक्त्रीम् वाजसाम् उत अन्नस्यापि सम्भक्त्रीम् नृवत् यथाऽन्येषां मनुष्याणां तद्वत् कृणुहि कुरु । देहीत्यर्थः । अथवा नः इति षष्ठीश्रुतेः उपरीति वाक्यशेषः । गोषणिमित्यादीन्यपि पणु दाने इत्यस्य रूपाणि । अस्माकमुपरि धियं प्रज्ञां बुद्धिं गवादीनां दात्रीं कुरु नृवत् यथा राजाऽन्यो वा [10]कश्चित् कस्यचिदुपरि[10] कुर्यात् तद्वत् । अथवा धीरिति कर्मनामैव । अस्माकमिदं यागलक्षणं कर्म गवादीनां दातृ कुरु । गवादिफलं कुर्वित्यर्थः । अन्येषामिव मनुष्याणाम् । किमर्थम् वीतये भक्षणाय । गवादिजन्योपभोगसम्पत्त्यर्थमित्यर्थः । अथवा वीतय इति कान्त्यर्थः । इदम् अस्माकं यागलक्षणं कर्म [11]दक्षिणादिसम्बद्धानां गवादीनां[11] सम्भक्तृ आत्मनो वीतये कामाय कुरु । कामयस्वेत्यर्थः ॥ १० ॥

वेङ्कट० अपि च अस्माकम् कर्म गवादेः सम्भक्तृ मनुष्यवत् आगत्य कुरु[12] अस्माकम् गमनाय ॥ १० ॥

[13]इति चतुर्थाष्टके अष्टमाध्याये अष्टादशो वर्गः[13] ॥

# [ ५४ ]

[14]भरद्वाजो बार्हस्पत्य ऋषिः । पूषा देवता । गायत्री छन्दः[14] ।

सं पूषन् विदुषा नय यो अञ्जसानुशासति । य एवेदमिति ब्रवत् ॥ १ ॥

सम् । पूषन् । विदुषा । नय । यः । अञ्जसा । अनुऽशासति । यः । एव । इदम् । इति । ब्रवत् ॥

---

१. ओप... मूको. २. °मनुया मूको. ३-३. अजाना वा शरीरे मूको. ४. शेयर्थ मूको. ५. गवा ... अजाना मूको. ६. सु...मूको. ७-७. ओपशब्द उपदशनि° मूको; 'उपदर' इ भरद्वाजः. ८. सुता मूको. ९. गोसहसादि° मूको. १०. कश्चि...कस्य° मूको. ११-११. 'संबद्धानाम्' न वि°; "सम्बन्धाना गवा° वि°. १२. कुर्वन्ति मूको. १३-१३. नास्ति मूको.

स्कन्द० हे पूषन्! विदुषा ज्ञानवता मार्गज्ञेन अन्येन वा केनचिद् तपस्विना सह अस्मान् सम् नय सङ्गमय। यः अञ्जसा ऋजुना अनुशासति अनुशास्ति अस्मान्। ईप्सितावस्थम् अस्मभ्यम् आचष्ट इत्यर्थः। यः च एव इदम् एवमिदम् इति अवधारितम् ब्रुवन् ब्रवीति। तत्त्वावधारणक्षम इत्यर्थः ॥ १ ॥

वेङ्कट० हे पूषन्! सम् नय अस्मान् विदुषा, यः विद्वान् अस्माकं नष्टं धनम् अञ्जसा अनुशास्ति, य एवम् इदम् इति नष्टं ब्रवीति ॥ १ ॥

समु॑ पू॒ष्णा ग॑मेमहि॒ यो गृ॒हाँ अ॑भि॒शास॑ति। इ॒म ए॒वेति॑ च॒ ब्रव॑त् ॥ २ ॥

सम्। ऊँ इति॑। पू॒ष्णा। ग॒मे॒म॒हि॒। यः। गृ॒हान्। अ॒भि॒ऽशास॑ति। इ॒मे। ए॒व। इति॑। च॒। ब्रव॑त् ॥

स्कन्द० उ इति पदपूरणः। पूष्णा सह सम् गमेमहि सङ्गच्छेमहि वयम्, यः गृहान् गृहाणि अभिशासति गच्छतेति आचष्टे। गृहगमनमार्गपरिपन्थिनो हि चोरादीन् पूषाऽपनयति। तान् अपनयन् यत एतेऽपनीताः, "ततो गच्छत गृहानित्येवम् आचष्ट" इव। इमे अर्थाः एव एवम् इति च ब्रवत् एव च ब्रवीति। ये च ज्ञेया अर्था उपन्यस्यन्ते तेषां च [१]तत्त्वावधारणक्षम इत्यर्थः[१] ॥ २ ॥

वेङ्कट० पूष्णा प्रणीता[२] [३]वयं तेन[३] सम् गच्छेमहि, यः नष्टानां गवाम् गृहाणि चोरस्थभूतानि अभिशास्ति इमे[४] गावः एवं च हृतम् इति च ब्रवीति ॥ २ ॥

पू॒ष्णश्च॒क्रं न रि॑ष्यति॒ न कोशो॑ऽव॑ पद्यते। नो अ॑स्य व्यथते प॒विः ॥ ३ ॥

पू॒ष्णः। च॒क्रम्। न। रि॒ष्य॒ति॒। न। कोशः॑। अव॑। प॒द्य॒ते॒। नो इति॑। अ॒स्य॒। व्य॒थ॒ते॒। प॒विः ॥

स्कन्द० पूष्णः स्वभूतम् चक्रम् रथस्य न रिष्यति न हिंस्यते। गच्छतो न भज्यत इत्यर्थः। न अपि कोशः दृषिदृतिः अव पद्यते "रथाद् भ्रंशते"। न अपि अस्य पूष्णः स्वभूता व्यथते पविः रथचक्रधारा। चक्रधाराऽपि न विनश्यतीत्यर्थः ॥ ३ ॥

वेङ्कट० पूष्णः आयुधम् न रिष्यति, न न्यूनं भवति। न चास्य कोशः[५] पतति[६]। नापि धारा अस्य व्यथते ॥ ३ ॥

यो अ॑स्मै ह॒विषा॒ऽवि॑ध॒न्न तं पू॒षापि॑ मृष्यते। प्र॒थ॒मो वि॑न्दते॒ वसु॑ ॥ ४ ॥

यः। अ॒स्मै॒। ह॒विषा॑। अवि॑धत्। न। तम्। पू॒षा। अपि॑। मृ॒ष्य॒ते॒। प्र॒थ॒मः। वि॒न्द॒ते॒। वसु॑ ॥४॥

स्कन्द० अस्मै इति चतुर्थी द्वितीयार्थे[१०]। यः एनं पूषणं हविषा अविधत् परिचरति, न तम् पूषा अपि मृष्यते। मृष्यतिः क्षमार्थः, मृष तितिक्षायामिति। न क्षमते। नोपेक्षत इत्यर्थः। किं तर्हि। सर्वत्र प्रथमः सः विन्दते लभते वसु धनम्। प्रथमं पूषा तस्मै धनं [११]ददाति नान्यस्मा इत्यर्थः[११] ॥ ४ ॥

---

१. ˚नयत् मूको. २-२ तत्तो ˚ विशेषेण˚ मूको. ३-३. तेरता˚ त्यर्थं मूको. ४. ˚गिरा ल एप; महता ल मस्ताव. ५-५. वन्नो दिवं कर्त. ॥ नास्ति ल ६. मे मूको ७-७. त्यात्पापि मूको. ८. घोर˚ मूको ९. पर ल एप. १०. ˚˚˚पूर्वार्थे मूको. ११-११. ददाति मूको.

वेङ्कट० धनस्य दाता त्वम् असि आघृण[१]। तथा यतो धनस्य राशिः च त्वमसि अजाश्व![१]। 'पूष्णोऽजाश्वः' (तु. बृदे ४,१४१)। पूष्णोऽजा अश्वा भवन्ति। कर्मवतः कर्मवतः सखा ॥ ३ ॥

पूषणं न्व१जाश्वमुप स्तोषाम वाजिनम्। स्वसुर्यो जार उच्यते ॥ ४ ॥

पूषणम्। नु। अजऽअश्वम्। उप। स्तोषाम। वाजिनम्। स्वसुः। यः। जारः। उच्यते ॥ ४ ॥

स्कन्द० पूषणम् नु क्षिप्रम् अजाश्वम् अजैरश्वसदृशैः शीघ्रगामिभिर्युक्तम् उप स्तोषाम उपस्तुवाम स्तवाम इत्यर्थः। वाजिनम् अन्नवन्तं वेगवन्तं वा। यः कीदृशम्। उच्यते स्वसुः। स्वसा भगिनी पूष्ण उषाः। कथम्। सृष्टिकाले [२]एकस्मात् प्रजापतेर्जातौ तौ[२] तेन पूष्ण [३]उषा भगिनी। अथ वा[३] यदेकस्माद् आदित्याख्याद् तेजस्समूहाद् उषस पूष्णश्च जन्म, तदपेक्षम् अस्या भगिनीत्वम्। अथवा स्वयसारित्वाद्[४] उषाः स्वसेत्युच्यते। [५]तस्या यः[५] जारः उच्यते। अन्यस्या वा कस्याश्चित् स्वसुः आसक्त[६]। श्रूयते यथा प्रजापतिः 'प्रजापतिर्वै स्वां दुहितरम् अभ्यध्यायत्' (ऐब्रा ३,३३) इति। अथवा स्वसुः उषसः जारः जरयिता नाशयिता[७] उच्यते जनैः। आदित्यो हि पूषा। स च स्वोदयेनोषसं जरयति ॥ ४ ॥

वेङ्कट० पूषणम् क्षिप्रम् अजाश्वम् उप स्तुमः अन्नवन्तम्। स्वसुः[८] उषसः यः जरयिता उच्यते। अपि चोपपतिरिव जारः ॥ ४ ॥

मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः। भ्रातेन्द्रस्य सखा मम ॥ ५ ॥

मातुः। दिधिषुम्। अब्रवम्। स्वसुः। जारः। शृणोतु। नः। भ्राता। इन्द्रस्य। सखा। मम ॥ ५ ॥

स्कन्द० मातुः दिधिषुम् पूष्णो माता 'रात्रिः, सा ह्येनं जनयति'। दिधिषुशब्दः यो ज्येष्ठस्य भ्रातुर्भार्यायाम्[९] अनियुक्तः प्रवर्तते [१०]तस्य वा वाचकः[१०]। ज्येष्ठायाः [११]वा भगिन्याम् अनूढायां[११] यः कनीयस्याः ऊढाया तस्य वा वाचकः। उभयमेतत् द्वयमपि न मातरं प्रति सम्भवति। अतोऽत्र दिधिषुशब्दः धृञ् धारणे इत्येतस्य क्रियाशब्दो विज्ञायते। स्वसा मातुः जारं दिधिषुं धारयितारम्। स्वोदयेन निरोद्धारमित्यर्थः। पूषा ह्यादित्यः स स्वोदयेन रात्रिं निरुणद्धि। तम् अब्रवम् ब्रवीमि यथा निर्वक्तितम्। स चोच्यमानः [१२]स्वसुः जारः[१२] शृणोतु नः अस्माकम्। भ्राता इन्द्रस्य उभयोरिन्द्रापूष्णोरेकस्मात् प्रजापतेर्जातत्वात्। सखिस्थानीयः मम ॥ ५ ॥

वेङ्कट० माता रात्री, तस्याः पतिम् स्तौमि[१]। उषसः जारः शृणोतु अस्मान् इति। इन्द्रस्य भ्राता मम च सखा इति ॥ ५ ॥

आजासः पूषणं रथे निशृम्भास्ते जनश्रियम्। देवं वहन्तु बिभ्रतः ॥ ६ ॥

---

१. °रः मूको. २-२. °जातौ मूको. ३-३. उ° °वा मूको. ४. स्वयसारित्वा° मूको. ५-५. तस्यार्थं मूको. ६. ओ भेदा मूको. ७-७. °ध्याय नाम° मूको. ८. स्वनर विकल्प, स्वर्ग. ९-९. रा° जनयति मूको. १०. भ्राता त या चो मूको. ११-११. तस्य मूको. १२-१२. वा न भ्रातवा मूको. १३-१३. जार मूको. १४-१४. स्तौमि द्रष्ट.

स्कन्द० किं कारणं यतोऽसौ न करम्भाद् एव केवलम्। किं तर्हि। उत-शब्दोऽप्यर्थे। घ-शब्दः पादपूरणः। अपि सः पूषा रथीतमः [1]अतिशयेन रथी सख्या सह[1] सत्पतिः सतां पालयिता युजा सहायेन योग्येन वा। कतमेन। इन्द्रः तृतीयार्थे प्रथमैषा। इन्द्रेण[2] वृत्राणि शत्रून् असुरान् वा जिघ्नते अत्यर्थं[3] हन्ति ॥ २ ॥

वेङ्कट० अपि च खलु सः अतिशयेन रथी सख्या सतां पतिः सहायेन पूष्णा[4] इन्द्रः असुरान् अत्यन्तं हन्ति ॥ २ ॥

उतादः परुषे गवि सूरश्चक्रं हिरण्ययम्। न्यैरयद्रथीतमः ॥ ३ ॥

उत। अदः। परुषे। गवि। सूरः। चक्रम्। हिरण्ययम्। नि। ऐरयत्। रथिऽतमः ॥ ३ ॥

स्कन्द० उत अपि [5]अदः चक्रस्य[5] वाऽयं व्यवहितस्यापि प्रतिनिर्देशः इदं चक्रमिति, [6]सप्तम्यर्थे वा[6] प्रथमा। अमुष्मिन् परुषे[7] परुषशब्दो[8] भासुरवचनः। भासुरे शुक्लवर्णे गवि द्युलोके गौरित्य-पठितमिदं[9] द्युनाम। सूरः[10] सर्ता गन्ता पूषा चक्रम् आदित्यमण्डलाख्यम् हिरण्ययम् हिरण्मयं [11]तत्सदृशम् उज्ज्वलतमम्[11] नि ऐरयत् नियतेन मार्गेण प्रेरयति उदयायाऽस्तमयाय च रथीतमः अतिशयेन [12]रथी। यस्त्वादित्यमण्डलमत्र[13] गोशब्देनोच्यत इति मन्यते[13] तत्र गवीति सप्तमीश्रुतेरव-स्थित[14] इति वाक्यशेषः। गवि आदित्यमण्डलेऽवस्थितः पूषा चक्रं प्रेरयति। चक्राकृति तदेव वाऽऽदित्यमण्डलं रथचक्रं चोच्यते। अथवा उदकं [15]चक्रम्। उदकं[15] कथम्। चक्रशब्दो हि समूहवाची, ब्राह्मणचक्रं भज। चक्रमिति सामर्थ्याच्चात्रोदकसमूहः परिगृह्यते। चक्रतेर्वा[16] गत्यर्थस्य चक्रमुदकम्। [17]तत् पृथिवीं प्रति[17] पृथिवीतो रश्मिभिरात्तमादं प्रति[18] प्रेरयतीति शिष्टपदयोजना सदृशी ॥ ३ ॥

वेङ्कट० अपि च एतत् पर्ववति[19] आदित्ये (तु. या २,६) सुवीर्यः पूषा चक्रम् हिरण्मयम्[20] नितराम् प्रेरयति रथतमः ॥ ३ ॥

यदद्य त्वा पुरुष्टुत ब्रवाम दस्र मन्तुमः। तत्सु नो मन्म साधय ॥ ४ ॥

यत्। अद्य। त्वा। पुरुऽस्तुत। ब्रवाम। दस्र। मन्तुऽमः। तत्। सु। नः। मन्म। साधय ॥ ४ ॥

स्कन्द० यत् अद्य त्वां हे पुरुष्टुत! बहुभिः स्तुत! पूषन्! ब्रवाम इदमिदं च अस्माकम् कुर्विति ब्रूमः। हे दस्र! दर्शनीय! तमसां वा उपक्षपयितः! मन्तुमः मन्तु. मननं स्तुतिज्ञानं वा तद्वन्! तत् सुष्ठु अस्माकम् मन्म प्रेप्सितं स्तुत्यम् वा साधय। तत्कुरु इत्यर्थः ॥ ४ ॥

1-1. भग ˙ सह मूको. 2. इन्द्रो मूको. 3. अर्थं मूको. 4. पूषः वि[1] रुपं; पूष्णः ह. 5-5. शब्दपकरय अ वि[1]. 6-6. ह्रि: वि[1]. 7. ऽरुषे मूको. 8. प्ररुष° मूको. 9. गौ…मिदि मूको. 10. सूर मूको. 11-11. सदृशमुज्ज्वल (ज्व भ.) लतम मूको. 12-12. रथीयारससारि° वि[1] भ; रथीया…त्वा° वि[1]. 13. मन्यते वि[1] भ. 14. °तिरवस्थित° वि[1] भ. 15-15. चक्रमुत मूको. 16. र्वा मूको. 17-17. त˙˙ मूको. 18. पृथिवी वि[1]. 19. °र्वेति मूको. 20. °ण्मय° ह.

वेङ्कट० यत् अद्य त्वा[१] हे मरुद्भिः स्तुत! भवान् दर्शनीय! शासवन्!, तत् सुष्ठु साधय अस्माकं स्तोत्रम्, मदीयं वा धनम् ॥ ४ ॥

इमं च नो गवेषणं सातये सीषधो गणम् । आराद् पूषन्नसि श्रुतः ॥ ५ ॥

इमम् । च । नः । गोऽएषणम् । सातये । सीसधः । गणम् । आरात् । पूषन् । असि । श्रुतः ॥ ५ ॥

स्कन्द० इमम् च नः अस्माकं सम्बन्धिनम्[२] गवेषणम् गा च इच्छति सः[३] "गवेषणस्तं त्वम्"[४] सातये लाभाय सीषधः साधय गणम् । गणः[५] समूह उच्यते, ऋत्विग्यजमानसमूहः[६] पुत्रपौत्रसमूहो वा । यथा आचारसम्बन्धी[७] ऋत्विग्यजमानसमूहः[८] पुत्रपौत्रसमूहो वा गोकामो[८] 'गा लभते'[९] तथा कुर्वित्यर्थः । किं कारणम् । उच्यते—आराद् दूरे हे पूषन्! असि श्रुतः[१०] । दाता पूर्वैस्त्वमस्माभिः श्रुतोऽसि[११] प्रत्याख्यातदातृत्वेत्यर्थः[१२] ॥ ५ ॥

वेङ्कट० इमम् च अस्माकं गवामैषितारं दानाय सीषधः[१३] मनुष्यगणम् । दूरादेव त्वं भवसि पूषन्![१४] विश्रुतः ॥ ५ ॥

आ ते स्वस्तिमीमह आरेअघामुपावसुम् । अद्या च सर्वतातये शं च सर्वतातये ॥ ६ ॥

आ । ते । स्वस्तिम् । ईमहे । आरेऽअघाम् । उपऽवसुम् ।

अद्य । च । सर्वऽतातये । शम् । च । सर्वऽतातये ॥ ६ ॥

स्कन्द० ते तव सम्बन्धिनीं त्वत्कर्तृकाम् स्वस्तिम् अविनाशम् आ ईमहे आयाचामहे वयम् आरेअघाम्[१५] आरे दूरे अघं पापं यस्याः सा[१६] "आरेअघा ताम्[१६] । अत्यर्थम्[१७] पापप्रणाशनीमित्यर्थः । उपावसुम्[१८] उपगतधनाम् अद्य च सर्वतातये 'सर्वदेवात्तातिल्'[१९] ( पा ४,४,१४२ ) इति स्वार्थे तातिल्प्रत्ययः[२०] । तत्रायमर्थः[२१]— अद्य च सर्वस्मै प्रयोजनाय "शम्" च शब्दोऽत्र आगामिकालमात्रोपलक्षणम् । अद्य च आगामिनि च काले सर्वस्मै प्रयोजनाय । अथवा तातिशब्दः तनोतेर्विस्तारार्थस्य । अद्य च आगामिनि च काले सर्वप्रयोजनविस्तारार्थमित्यर्थः ॥ ६ ॥

वेङ्कट० आ याचामहे[२२] स्वस्तिम् त्वदीयाम् दूरेपापाम् सन्निकृष्टधनाम् अद्य च शम् च सर्वस्य धनस्य[२३] विस्ताराय[२४] ॥ ६ ॥

[२५]इति चतुर्थाष्टके अष्टमाध्याये द्वाविंशो वर्गः[२५] ॥

---

१. द्रा कृ दर्प. २. सम्बन्धि वि[१] अ. ३. सा मूको. ४-४. "पसवे मूको. ५. गण मूको. ६-६. "मूह" स[१] मूको. ७. "समूह वि[१] अ; "सह वि[१]. ८. गोकामा मूको. ९-९. गामाह' वि[१]; गाल्मते . वि[१]. १०. श्रुत मूको. ११. श्रुतोऽपि वि[१]. १२. प्रत्याख्यानदातृत्वेन मूको. १३. नास्ति मूको. १४. "प मूको. १५. "अघाम मूको. १६-१६. "अघामना वि[१]; "अघानमता वि[१] अ. १७. अत्यर्थेन मूको. १८. "वसुम मूको. १९. सार्वदेवात्तातिल् मूको. २०. तातिल' मूको. २१-२१. स्वशब्दश्च शब्दोऽत्रा ("त्र" वि[१]) गमिकालमात्रोप...र्थः मूको. २२. "हे ते वि[१] दपं. २३. नास्ति दपं. २४. "स्तरस्य मूको. २५-२५. नास्ति मूको.

[५७]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रापूषणौ देवता । गायत्री छन्दः[1] ।

इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये ॥ १ ॥

इन्द्रा । नु । पूषणा । वयम् । सख्याय । स्वस्तये । हुवेम । वाजऽसातये ॥ १ ॥

स्कन्द० 'सूक्त इन्द्रोऽपि पञ्चमे' । पञ्चमेऽस्मिन् सूक्ते[2] इन्द्रोऽपि देवता, न केवलं पूषैव । इन्द्रा नु पूषणा परस्परापेक्षम् अनेकैकेन शब्देन [3]द्वयोरपीन्द्रापूष्णोरभिधानम् । तेन[3] प्रत्येकं द्विवचनप्रवृत्तिः । नु इति क्षिप्रनाम । क्षिप्रम् इन्द्रापूषणौ वयम् सख्याय सखिभावाय स्वस्तये अविनाशाय च हुवेम आह्वयामः[4], वाजसातये अन्नसंभजनाय च ॥ १ ॥

वेङ्कट० इन्द्रापूषणौ क्षिप्रम् वयम् सख्याय अविनाशाय ह्वयामहे, अन्नलाभाय च ॥ १ ॥

सोममन्य उपासदत् पातवे चम्वोः सुतम् । करम्भमन्य इच्छति ॥ २ ॥

सोमम् । अन्यः । उप । असदत् । पातवे । चम्वोः । सुतम् । करम्भम् । अन्यः । इच्छति ॥ २ ॥

स्कन्द० सोमम् अन्यः एकः उप असदत् [5]उपसीदति इन्द्रः[5] पातवे पातुम् चम्वोः अधिषवणफलकयोः सुतम् अभिषुतम्[6] । करम्भम् दध्ना घृतेन वा [7]मिश्रिताः सक्तवः[7] करम्भ उच्यते तम् अन्यः इच्छति पूषा ॥ २ ॥

वेङ्कट० सोमम् एकः[8] उप असीदद् इन्द्रः पातुम् अधिषवणफलकयोः अभिषुतम् । करम्भम् पूषा इच्छति ॥ २ ॥

अजा अन्यस्य वह्नयो हरी अन्यस्य संभृता । ताभ्यां वृत्राणि जिघ्नते ॥ ३ ॥

अजाः । अन्यस्य । वह्नयः । हरी इति । अन्यस्य । सम्ऽभृता । ताभ्याम् । वृत्राणि । जिघ्नते ॥ ३ ॥

स्कन्द० अजाः अन्यस्य वह्नयः 'वहिः' (निघ १,१४) इति अश्वनाम अश्वाः वोढार इत्यर्थः । कस्य । पूष्णः । हरी अन्यस्य इन्द्रस्य सम्भृता सम्बद्धौ युक्तौ[9] । ताभ्याम् इत्यत्र तृतीया । तृतीयाश्रुतेर्या गत्वेति[10] वाक्यशेषः । ताभ्यां हरिभ्यां हेतुभूताभ्यां गत्वा वा इन्द्रः वृत्राणि शत्रून् मेघवृन्दानि वा जिघ्नते पुनःपुनर्हन्ति ॥ ३ ॥

वेङ्कट० अजाः पूष्णः वह्नयः[11] हरी इन्द्रस्य सम्भृतौ । सः ताभ्याम् शत्रून् हन्ति ॥ ३ ॥

यदिन्द्रो अनयद् रितो महीरपो वृषन्तमः । तत्र पूषाभवत् सचा ॥ ४ ॥

---

1-1. नास्ति मूको. 2. नास्ति वि[1]. 3-3. °धान···तेन मूको. 4. आह्वयामः मूको. 5-5. °सीदर् मूको. 6. °भिषुतं मूको. 7-7. °ता स···वे वि[1] अ; °ता स्वे वि[1]. 8. एककम् वि[1] लपं; एकम् ए. 9. युक्तौ मूको. 10. गत्वेति मूको. 11. नास्ति मूको.

यत्। इन्द्रः। अनयत्। रितः। महीः। अपः। वृषन्ऽतमः। तत्र। पूषा। अभवत्। सचा ॥ ४ ॥

स्कन्द० अयम् यत्[1] 'मेघस्थानम् इन्द्रः'[2] रितः[3] गतः प्राप्तः सन्। अथवा यदिति सप्तम्याः लुक्। यस्मिन् काले इन्द्रो मेघं प्रति गतः। अनयत् नयति पृथिव्यां पातयति महीः अपः महान्ति[4] वृष्टिलक्षणान्युदकानि वृषन्तमः अतिशयेन वर्षिता। तत्र तस्मिन् स्थाने काले वा पूषा अपि अभवत् भवति सचा सहायः। पूष्णा सहितो वर्षति न केवल इत्यर्थः ॥ ४ ॥

वेङ्कट० यदा इन्द्रः नयति गच्छन्तीः महतीः अपः वर्षितृतमः। तत्र[5] पूषा भवति सहायः ॥ ४ ॥

तां पूष्णः सुमतिं वयं वृक्षस्य प्र वयामिव। इन्द्रस्य चा रभामहे ॥ ५ ॥

ताम्। पूष्णः। सुऽमतिम्। वयम्। वृक्षस्य। प्र। वयाम्ऽइव। इन्द्रस्य। च। आ। रभामहे ॥ ५ ॥

स्कन्द० तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। 'या स्तोत्रनुविधृक्षात्मिका'[6] ताम् पूष्णः सुमतिम् शोभनां बुद्धिम्[7] वयम् वृक्षस्य 'वयाम् इव'[8]। वयाः[9] शाखाः[10] उच्यन्ते (तु. या १,४)। यथा कश्चिद् वृक्षस्य शाखाम्, एवम्। न च केवलस्य पूष्णः। किं तर्हि। इन्द्रस्य च प्र आ रभामहे प्रकर्षेणाऽऽश्रयामः[11] ॥ ५ ॥

वेङ्कट० ताम् पूष्णः स्वभूताम् सुमतिम् वयम् वृक्षस्य शाखामिव प्रकर्षेणाऽऽश्रयामः, इन्द्रस्य च ॥ ५ ॥

उत्पूषणं युवामहेऽभीशूँरिव सारथिः। मह्या इन्द्रं स्वस्तये ॥ ६ ॥

उत्। पूषणम्। युवामहे। अभीशून्ऽइव। सारथिः। मह्यै। इन्द्रम्। स्वस्तये ॥ ६ ॥

स्कन्द० उत् युवामहे यु मिश्रणे। ऊर्ध्वं मिश्रयामः[12] उत्क्षिपामः। स्वार्थसाधनार्थम् उत्थापयाम इत्यर्थः। यौतिरत्र स्तुत्यर्थः। अथवा 'स्तौति यौति रौति' (निघ ३,१४) इत्यर्चतिकर्मसु[13] पाठात् स्तुम इत्यर्थः। कम्। पूषणम्। कथम्। अभीशून् इव सारथिः उच्छब्दस्तु[14] धात्वर्थानुवादी। यथाऽप्रमादाद्[15] उत्क्षिपति स्तौति वा सारथिः तद्वत्। किमर्थम्[16]। मह्यै स्वस्तये महते अविनाशाय। न च केवलं पूषणम्। किं तर्हि। इन्द्रम् च ॥ ६ ॥

वेङ्कट० पूषणम् वयम् उत् युवामहे। अभिमुखम् आनयनाम् इत्यर्थः। अभीशून् इव सारथिः महते अविनाशाय, इन्द्रम् च ॥ ६ ॥

[17]इति चतुर्थाष्टके अष्टमाध्याये त्रयोविंशो वर्गः[17] ॥

[ ५८ ]

[18]भरद्वाजो बार्हस्पत्य ऋषिः। पूषा देवता। त्रिष्टुप् छन्दः, द्वितीया जगती[18]।

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ १ ॥

---

1. नास्ति मूको. 2-2. °नमद वि'; °नमिन्द त्रि° अ. 3. रितं वि'. 4. महान्ति वि°. 5. तु वि' अ. 6-6. °या स्तोत्र° वि'. 7. बुद्धं वि' अ. 8-8. वयामिव वि' अ. 9. वयां मूको. 10. शाखा मूको. 11. °श्रयाम मूको. 12. विश्रयाम वि'. 13. "र्चयति" वि'. 14. उच्छ° मूको. 15. 'प्रमादा' वि' अ. 16. मुद्रितम् मूको. 17-17. नास्ति मूको.

शुक्रम् । ते । अन्यत् । यजतम् । ते । अन्यत् । विषुरूपे इति विषुऽरूपे । अहनी इति । द्यौःऽइव । असि ।
विश्वाः । हि । मायाः । अवसि । स्वधाऽवः । भद्रा । ते । पूषन् । इह । रातिः । अस्तु ॥ १ ॥

स्कन्द० शुक्रम् ते अन्यत् । 'शुक्रशब्दोऽत्र शुक्लपर्याय । शुक्लं ते तव अन्यत् एकम् । किं पुनस्तत् । सामर्थ्याद् रूपम् । यजतम् ते अन्यत् । यजतशब्दोऽत्र शुक्लप्रतियोगित्वाद् लोहितपर्यायः । लोहितं ते अन्यद् अपरं रूपम्[1] । पूषा आदित्यः तस्य मध्यन्दिने शुक्लं रूपं लोहितम् उदयास्तमययोः । अथवा शुचेर्दीप्त्यर्थस्य 'शुक्रो मत्वर्थीयः । शुक्रं दीप्तिमद् उच्यते । दीप्तिमत् ते तव एकं रूपं मण्डलाश्रयम् । यजतं यष्टव्यम् अन्यत् मण्डलस्याधिष्ठायकम् । ते चैते विषुरूपे परस्परं भिन्नरूपे शुक्ललोहितात्मरूपेण । ते च अहनी अहोरात्रे एते स्थसि । तव चैते कर्मणी, यतस्त्वकर्तृके, एतं यतस्त्वमसि,[1] द्यौः इव च त्वम् असि । यथा[2] द्यौर्व्यापिनी तथा त्वमपीत्यर्थः । विश्वाः हि हि-शब्दोऽत्र चार्थे । 'सर्वाश्च मायाः प्रज्ञाः[3] अवसि प्रज्ञाहेतुभूतप्रकाशदानद्वारेण त्वं पालयसि । हे स्वधावः! स्वधेत्युदकनाम (तु. निघ १,१२), अन्ननाम (तु. निघ २,७) वा । तस्माद्धतेनोदकेन हविर्लक्षणेन वान्नेन तद्वन्![4] किञ्च भद्रा कल्याणी ते तुभ्यं हे पूषन्! इह अस्मदीये यज्ञे रातिः हविर्दानम् अस्तु भवतु । अथवा भद्रा ते इति ते-शब्द. 'कर्तृकर्मणोः कृति' (पा २,३,६५) इति कर्तृलक्षणषष्ठ्यन्तः । कल्याणी त्वत्कर्तृका रातिरिहास्तु । कल्याणं दानम् इहास्मभ्यं त्वं देहीत्यर्थः ॥ १ ॥

वेङ्कट० शुक्रम् ते अन्यत् रूपम् । यजतशब्दः[5] सामर्थ्यात् कृष्णवचनः कृष्णम् अन्यत् । स त्वम् नानारूपे अहोरात्रे आदित्य इव च भवसि । यथाऽहोरात्राभ्यां युक्त आदित्यः । तस्य हि पार्श्वयोः अहोरात्रे भवतः । यास्कस्त्वाह — 'शुक्रम् ते अन्यत् । लोहित ते अन्यत् । 'यजतं ते अन्यद्'[6] । यज्ञियं ते अन्यत्'[7] (या १२,१७) इति । सर्वाणि प्रज्ञानानि रक्षसि अन्नवन्![8] । भजनवती ते पूषन्! मयि रातिः अस्तु ॥ १ ॥

अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः ।
अष्ट्रां पूषा शिथिरामुद्वरीवृजत् संचक्षाणो भुवना देव ईयते ॥ २ ॥

अजऽअश्वः । पशुऽपाः । वाजऽपस्त्यः । धियम्ऽजिन्वः । भुवने । विश्वे । अर्पितः ।
अष्ट्राम् । पूषा । शिथिराम् । उत्ऽवरीवृजत् । सम्ऽचक्षाणः । भुवना । देवः । ईयते ॥ २ ॥

स्कन्द० अजाः अश्वाः शीघ्रगमनादिना सादृश्येनाश्वसदृशा यस्य सः अजाश्वः पशुपाः पशूनां पालयिता वाजपस्त्य[9] वाजम् अन्नम् । पस्त्यं गृहम् । हविर्लक्षणम् अन्नं गृहं यस्य स वाजपस्त्यः । यत्रैव हविर्लभ्यते तत्रैव निवसतीत्यर्थः.[9] । धियंजिन्वः प्रज्ञया प्रीणयिता[10] विश्वे सर्वस्मिन् अर्पितः । आ गतौ इत्यस्य यमन्तस्य रूपम् । गमितः । स्वात्मनाऽनुप्रवेशित इत्यर्थः । केन । सामर्थ्याद्

---

१-१. मूको. भाष्याभागस्य निरुक्तभाष्यीयं स्कन्दस्वामिभाष्यम् (१२,१७) इहोद्धृत्य पूरितः पाठः.
२. यथैव मूको. ३-३. सर्वाश्चमाया प्रज्ञा मूको. ४. तद्वत् मूको. ५. यजत° ६-६. नास्ति मूको.
७. °न्तत्र हवि वा मूको. ८. अन्न च मन् मूको. ९. निवसतीत्यर्थो वि; निवसतीत्यर्थं वि°. १०. °ता
मूर्ध भजना वै मूको.

पूषा । सुऽबन्धुः । दिवः । आ । पृथिव्याः । इळः । पतिः । मघऽवा । दस्मऽवर्चाः ।
यम् । देवासः । अददुः । सूर्यायै । कामेन । कृतम् । तवसम् । सुऽअञ्चम् ॥ ४ ॥

स्कन्द० यं देवास इति यच्छब्दाद् तच्छब्दोऽध्याहर्तव्यः । सः पूषा सुबन्धुः बन्धवो ज्ञातयः, ते [1-1]शोभनाः श्रीप्रदाः यस्य स[1] सुबन्धुः । दिवः आ आकारोऽत्र सामर्थ्याच्चार्थे । दिवश्चापि पृथिव्याः च इळः । 'इळ्' (तु. निघ २,७) इत्यन्ननाम । अन्नस्य च पतिः स्वामी मघवा धनवांश्च दस्मवर्चाः दस्म दर्शनीयं तमःक्षयकरं[2] वा वर्चो दीप्तिर्यस्य स[3] दस्मवर्चाः । स कीदृशः पूषा । उच्यते—यम् देवासः देवाः अददुः दत्तं दत्तवन्तः सूर्यायै सूर्यस्य भार्यायै । यमभ्यर्थ्य सूर्यस्य भार्याया दूतं प्रेषितवन्त इत्यर्थः । कामेन कृतम् स्वेच्छया दूतं कृतम् । अभ्यर्थनया दौत्यम् आपादितमित्यर्थः । तवसम् महान्तम् स्वञ्चम् सुगमनम् ॥ ४ ॥

वेङ्कट० पूषा शोभनो बन्धुः दिवः च पृथिव्याः च अन्नस्य पतिः[4] धनवान् दर्शनीयतेजाः, यम् पूषणम् देवाः दत्तवन्तः[5] सूर्यायै कामेन[6] कृतम् महान्तम् सुगमम् ॥ ४ ॥

[7]इति चतुर्थाष्टके अष्टमाध्याये चतुर्विंशो वर्गः[7] ॥

## [ ५९ ]

[8]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्राग्नी देवता । बृहती छन्दः, सप्तम्याद्यास्तिस्रः अनुष्टुभः[8] ।

प्र नु वो॑चा सु॒तेषु॑ वां वी॒र्या॒३॒॑ यानि॑ च॒क्रथुः॑ ।
ह॒तासो॑ वां पि॒तरो॑ दे॒वश॑त्रव॒ इन्द्रा॑ग्नी॒ जीव॑थो यु॒वम् ॥ १ ॥

प्र । नु । वो॒च॒ । सु॒तेषु॑ । वा॒म् । वी॒र्या॑ । यानि॑ । च॒क्रथुः॑ ।
ह॒तासः॑ । वा॒म् । पि॒तरः॑ । दे॒वऽश॑त्रवः । इन्द्रा॑ग्नी॒ इति॑ । जीव॑थः । यु॒वम् ॥ १ ॥

स्कन्द० 'प्र ऐन्द्राग्नं' । द्वे पूर्वे सूक्ते इन्द्राग्निदेवत्ये । नु क्षिप्रम् प्र वोच लिङि उत्तमपुरुषैकवचने 'वच उम्' (पा ७,४,२०) इत्युमागमो 'द्विर्वचनाभावश्च छान्दसत्वात्' । प्रब्रवीम्यहम् सुतेषु सोमेषु वाम् युवयोः वीर्या वीरकर्माणि[9] यानि चक्रथुः कृतवन्तौ स्थः । कतमानि तानि । उच्यते—हतासः हता युवाभ्याम् । के । उच्यते—वाम् पितरः युवयोः पितरः । पितरोऽपि युवाभ्यां हताः किमुतान्ये सम्बन्धिन इत्यर्थः । कीदृशाः । उच्यते—देवशत्रवः देवाः शत्रवो येषां ते देवशत्रवः । असुरा इत्यर्थः । ये हि न यजन्ते तेषां देवाः शत्रवः । तांश्च हत्वा स्वयं हे इन्द्राग्नी । जीवथः युवम् । देवद्विषः सम्बन्धिनोऽपि हतवतोर्युवयोः किंचित्पीडाऽपि नास्तीत्यर्थः ॥ १ ॥

---

1-1. शोभ ··· यस्य प्रथमश्रीप्रदा स च वि[1]; शोभ ··· यस्य श्रीप्रदाः स वि[2]. 2. °करो मूको. 3. नास्ति मूको. 4. पतेः वि[1] छ[2]; पतिः छ. 5. दत्तवन्त छ सर्वे. 6. °मेन कामेन कर्प. 7-7. नास्ति मूको. 8-8. °षः इत्यत्र° वि[1]; °च इत्याद्य° वि[2]. 9. °कर्माणि वि[1].

अग्नी इन्द्रा[1] अग्नी इति परस्परापेक्षमत्र द्विवचनम् । 'नु इत्यपि'[2] क्षिप्रनाम । क्षिप्रम् इन्द्राग्नी अवसा तर्पणेन निमित्तेन । सोमेन तर्पयितुमित्यर्थः । इह यज्ञे वज्रिणा वज्रवन्तौ । यद्यपि इन्द्र एवैको[3] वज्री नाग्निः[4], तथापि साहचर्याद् अयमुभयोः वज्रिव्यपदेशः । वयम् देवा देवौ हवामहे ॥ ३ ॥

वेङ्कट० 'सङ्गतौ सुते सोमे सह अश्वौ इव सरणशीलौ पातेऽत्रनीये इन्द्राग्नी' 'क्षिप्रम् रक्षणार्थम् इह आयुधवन्तौ वयम् देवौ हवामहे' ॥ ३ ॥

य इ॑न्द्राग्नी सु॒तेषु॑ वां॒ स्तव॒त् तेष्वृ॑तावृधा ।
जो॒ष॒वा॒कं वद॑तः पज्रहोषिणा॒ न दे॑वा भ॒सथ॑श्च॒न ॥ ४ ॥

यः । इन्द्रा॑ग्नी॒ इति॑ । सु॒तेषु॑ । वा॒म् । स्तव॑त् । तेषु॑ । ऋ॒त॒ऽवृ॒धा॒ ।
जो॒ष॒ऽवा॒कम् । वद॑तः । प॒ज्र॒ऽहो॒षि॒णा॒ । न । दे॒वा॒ । भ॒सथः॑ । च॒न ॥ ४ ॥

स्कन्द० यः स्तोता हे इन्द्राग्नी ! सुतेषु सोमेषु वाम् युवाम् स्तवत् आदरेण स्तौति, तेषु व्यत्ययेन षष्ठ्येकवचनस्य स्थाने सप्तमीबहुवचनमेतत् । तस्य ऋतावृधा सत्यस्य यज्ञस्य वा वर्धयितारौ जोषवाकम् वदतः । जुषी प्रीतिसेवनयोः । प्रीणयितृ सेव्यं वा[5] वचनं जोषवाकः[6] । अत्यन्तोत्कृष्टस्तुतिरित्यर्थः । तां वदतः उच्चारयतः स्तुवतो यज्ञे स्वभूतं वा सोमं हे पज्रहोषिणा ! पज्रम्[7] अन्नं हविर्लक्षणं यद्वं वा स्तुतिक्रियाविषयं तद्वन्तः पज्राः[8] अङ्गिरस ऋषय ऋत्विजो वा, तेषां यत्स्वभूतं होतव्यं हविः तद्वन्तौ पज्रहोषिणौ ! देवा ! देवौ ! न भसथः चन 'भसथः' ( निघ २,८ ) इत्यत्तिकर्मा, चनेति निपातः[9] पदपूरणो वा कदाचिदपीत्यस्मिन् वाऽर्थे । स्तुतिश्रवणसक्तौ[10] कदाचिदपि न भक्षथः[11] न पिबथः सोमम् । उत्कृष्टस्तुतिश्रवणसक्तयोः युवयोः भोजनमपि विस्मृतमिति[12] समस्तार्थः । यास्कस्त्वाह—'जोषवाकमित्यविज्ञातनामधेयम्' ( या ५,२२ ) इति । अविज्ञातम् अविस्पष्टं[13] वचनं जोषवाक उच्यते । अत्र पूर्वस्मिन्नर्धर्चे उत्तरस्यार्धर्चस्य भसथ इति क्रियापदमनुषज्यैकवाक्यता योज्या । यः सुतेषु सोमेषु युवां सम्यक्स्तौति, तस्य यज्ञे सोमं भसथः अश्नीथः । पिबथ इत्यर्थः । जोषवाकं स्वविस्पष्टं वदतः असम्यक् स्तुवतः न कदाचिदपि भसथ इति ॥ ४ ॥

वेङ्कट० यः इन्द्राग्नी ! सुतेषु सोमेषु वाम् स्तौति, तेषु सोमेषु हे यज्ञस्य वर्धयितारौ ! । तस्य सोमम् अश्नीथ इति वाक्यशेषः । अथ योऽयं जोषवाकं वदति । 'जोषवाकमित्यविज्ञातनामधेयं जोषयितव्यं भवति' इति । जोषवाकम् वदतः समीचीनं वक्तुमशक्तस्य हे प्राज्ञितहोषिणौ ! न देवौ तस्य सोममश्नीथ इति यास्कः ( ५,२२ ) ॥ ४ ॥

---

1. नास्ति मूको. 2-2. नु ···स्यपि मूको. 3. °वैको वि' अ. 4. नाग्नी मूको. 5-5. नास्ति वि' लपं. 6-6. नास्ति वि'. 7. वां अ वि'. 8. °वाकं मूको. 9. पज्रम् मूको. 10. पज्रा मूको. 11. निपात मूको. 12. श्रुति' मूको. 13. भर्थ. मूको. 14. विस्मरति मूको. 15. अपि स्पष्ट मूको.

च नपुंसकता। त्रिंशतं मुहूर्तान्[1] स्वेन पादेनाक्रान्तवती। त्रिंशन्मुहूर्तकस्य अहोरात्रस्य आदिम् आदित्योदयं[2] प्राप्तेत्यर्थः। आदित्योदयप्राप्त्या चात्र मनुष्याणां व्यापारकालप्राप्तिर्लक्ष्यते। उषा उदिता, सूर्योऽप्युदितः, प्राप्तः सर्वमनुष्याणां व्यापारकाल इत्यर्थः ॥ ६ ॥

वेङ्कट० पादवर्जिता इयम् पद्वतीभ्यः[3] पूर्वा आगच्छति शीघ्रम् उषाः। त्यक्त्वा शिरः। शिरोरहि-ताऽपीत्यर्थः। मनुष्याणां वयसां च जिह्वया अत्यन्तं शब्दं कुर्वाणा चरन्ती त्रिंशतं[4] मुहूर्तान् एकैकाह्ना अतिक्रामति ॥ ६ ॥

इन्द्राग्नी आ हि तन्वते नरो धन्वानि बाह्वोः।
मा नो अस्मिन् महाधने परा वर्क्तं गविष्टिषु ॥ ७ ॥

इन्द्राग्नी इति। आ। हि। तन्वते। नरः। धन्वानि। बाह्वोः।
मा। नः। अस्मिन्। महाऽधने। परा। वर्क्तम्। गोऽइष्टिषु ॥ ७ ॥

स्कन्द० किञ्च हे इन्द्राग्नी! आ हि तन्वते हि-शब्दः पादपूरणः। आतन्वते विततज्यानि[5] कुर्वन्ति नरः एतेऽस्माकं शत्रुभूता मनुष्याः धन्वानि धनूंषि बाह्वोः। बाहुसम्बन्धाद् हस्तावत्र बाहू उच्येते। एतेऽस्माभिः सह सङ्ग्रामार्थं[6] हस्ताभ्यां धनूंषि गृह्णन्तीत्यर्थः। एतद् ज्ञात्वा मा[7] नः अस्मान् अस्मिन् महाधने सङ्ग्रामे परा वर्क्तम्। परा इत्येष परीत्येतस्य [8]स्थाने वृजिर्वर्जनार्थः[8]। वर्जनं च त्यागः। मा परित्यक्तमित्यर्थः[9]। गविष्टिषु। सङ्ग्राम-विशेषणमेतत्। एकवचनस्य स्थाने बहुवचनम्। गावः प्राप्तुमिष्यन्ते[10] येन सङ्ग्रामेण स गविष्टिः, तस्मिन् ॥ ७ ॥

वेङ्कट० इह इन्द्राग्नी! बाह्वोः स्थितानि धनूंषि योद्धारो मनुष्याः आततज्यानि कुर्वन्ति प्रभाताम्। मा अस्मान् अस्मिन् सङ्ग्रामे परित्यजतम् गवामन्वेषणेषु। गावश्च आजिहीर्षितासु गोष्वित्यर्थः ॥ ७ ॥

इन्द्राग्नी तपन्ति माघा अर्यो अरातयः।
अप द्वेषांस्या कृतं युयुतं सूर्यादधि ॥ ८ ॥

इन्द्राग्नी इति। तपन्ति। मा। अघाः। अर्यः। अरातयः।
अप। द्वेषांसि। आ। कृतम्। युयुतम्। सूर्यात्। अधि ॥ ८ ॥

स्कन्द० हे इन्द्राग्नी! तपन्ति सन्तापयन्ति मा[11] अघाः पापाः अर्यं अरयः अरातयः[12] अदातारः। देवेभ्यो हविषाम् अप्रदातार इत्यर्थः। एतत् ज्ञात्वा अप द्वेषांसि आ कृतम्। [13]अपाकृतम् अपनयतं द्वेषांसि द्वेष्याण्यसत्पापानि[13], यैः सम्बन्धात्[14] माम् एते सन्तापयन्ति। अथवा द्वेषांसीति व्यत्ययेन

1. मुहूर्तान् मूको. 2. °होरात्रादि° मूको. 3. वद° मूको. 4. °शत् मूको. 5. °ततज्या… नि मूको. 6. सङ्ग्रामार्थं मूको. 7. नास्ति वि°. 8-8. स्था…वृजि° मूको. 9. परित्यक्त° मूको. 10. °ध्यन्ते मूको. 11. मा वि° अ. 12. …°य मूको. 13-13. °अप…प्या° मूको. 14. सम्बन्ध° वि°.

[ ६० ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्राग्नी देवता । गायत्री छन्दः, आद्यास्तिस्रः त्रयोदशी च त्रिष्टुभः, चतुर्दशी बृहती, पञ्चदश्यनुष्टुप्[1] ।

श्नथ॑द् वृ॒त्रमु॒त स॑नोति॒ वाज॒मिन्द्रा॒ यो अ॒ग्नी सहु॑री सप॒र्यात् ।
इ॒र॒ज्यन्ता॑ वस॒व्य॑स्य॒ भूरेः॒ सह॑स्तमा॒ सह॑सा वाज॒यन्ता॑ ॥ १ ॥

श्नथ॑त् । वृ॒त्रम् । उ॒त । स॒नो॒ति॒ । वाज॑म् । इन्द्रा॑ । यः । अ॒ग्नी इति॑ । सहु॑री॒ इति॑ । स॒प॒र्यात् ।
इ॒र॒ज्यन्ता॑ । व॒स॒व्य॑स्य । भूरेः॑ । सहः॑ऽतमा । सह॑सा । वा॒ज॒ऽयन्ता॑ ॥ १ ॥

स्कन्द० श्नथत् अप्रतिबन्धकर्ता ( तु निघ २,१९ ) । हन्ति वृत्रम् स्वशत्रुम् उत सनोति । षणु दाने । ददा-त्यर्थिभ्यः वाजम् अन्नम् । अन्नवांश्च भवति इत्यर्थः । यः किं करोति । उच्यते—इन्द्रा यः अग्नी यो मनुष्य. इन्द्राग्नी सहुरी अभिभवनशीलौ सपर्यात् परिचरति । कीदृशौ । इरज्यन्ता 'इरज्यति' (निघ २, २१ ) इत्यैश्वर्यकर्मा । 'ईशानौ वसव्यस्य' वसोः समूहो वसव्यस्तस्य धनसमूहस्य भूरेः बहोः सहस्तमा सह.शब्दोऽत्रान्तर्णीतमत्वर्थः । बलवत्तमौ सहसा बलेन वाजयन्ता हविर्लक्षणम् अन्नम् इच्छन्तौ ॥ १ ।

वेङ्कट० हन्ति उपद्रवम्[1] । अपि च लभते अन्नम्[2] । यः[3] इन्द्राग्नी परिचरति समानाह्वानौ ईश्वरौ भवन्तौ बहोः वसुसमूहस्य अतिशयेन बलिनौ बलेन युद्धं कुर्वाणौ ॥ १ ॥

ता यो॑धिष्टम॒भि गा इ॑न्द्र नू॒नम॒पः स्व॑रु॒षसो॑ अग्न ऊ॒ळ्हाः ।
दिशः॒ स्व॑रु॒षस॑ इन्द्र चि॒त्रा अ॒पो गा अ॑ग्ने युवसे नि॒युत्वा॑न् ॥ २ ॥

ता । यो॒धि॒ष्ट॒म् । अ॒भि । गाः । इ॒न्द्र॒ । नू॒नम् । अ॒पः । स्वः॑ । उ॒षसः॑ । अ॒ग्ने॒ । ऊ॒ळ्हाः ।
दिशः॑ । स्वः॑ । उ॒षसः॑ । इ॒न्द्र॒ । चि॒त्राः । अ॒पः । गाः । अ॒ग्ने॒ । यु॒व॒से॒ । नि॒युत्वा॑न् ॥ २ ॥

स्कन्द० यावुक्तगुणौ स्थः ता तौ युवाम् योधिष्टम् अयुध्येथाम् अभि गाः 'अभिरभागे' ( पा १, ४,९१ ) इत्येवम् अत्राभिर्लक्षणे 'कर्मप्रवचनीय इति गवां' लक्षणार्थेनाभिधानम् । फलभूता गाः प्रति[7] । यतः[8] अस्मभ्यं ता दातुम्, तदर्थं 'अयत युवाम् अयुध्येथाम्' इत्यर्थः । हे इन्द्र । योधिष्टमिति द्विवचननिर्देशात् उभाविन्द्राग्नी युद्धे विनियुयुक्षितावित्ति अन्यतरसम्बोधनं[10] प्रदर्शनार्थं वा आदरातिरेकख्यापनार्थं वा[11], यथा पितापुत्रयोः कृषिक्रियायां विनियुयुक्षितयोः पितुरेव सम्बोधनं देवदत्त । कृषायां युवां पितापुत्राविति । नूनम् इति तु पादपूरणम् । न च केवला गाः[13] प्रति । किं तर्हि । अपः उदकानि[13] च वृष्टिलक्षणानि प्रति । वृष्ट्यर्थं चेत्यर्थः अथवा योधिष्टमिति[14] परस्मैपदात् 'युध्यति धन्वति' ( निघ २,१४ ) इति च परस्मैपदिनो युध्यतेर्लिङ्क्येसु[15] पाठाद् युध्यतिरिह गत्यर्थः । अभिशब्दस्य चोपसर्गस्य अनेन सम्बन्धः ।

---

१-१. नास्ति मूको. २-२. शान्तोपद्रव' मूको. ३. उपद्रम् इ एप. ४. 'सम् च वि'. ५. नास्ति वि'. ६-६. 'नीयः···गवां मूको. ७. प्रतिमा वि' भ; प्रति मा वि'. ८. उप मूको. ९-९. तस्मा···यु ( च वि'. ) ध्येथा मूको. १०. 'विस्सन्धकर' मूको. ११. नास्ति मूको. १२. नास्ति वि' भ. १३. कानि मूको. १४. योधिष्ठ' मूको. १५. युध्येर' मूको.

स्कन्द० ता तौ हुवे आह्वयामि, ययोः इदम् पप्रे । पततिः[1] स्तुत्यर्थः ( द्र० निघ ३,१४ ) । स्तौति विश्वम् सर्वम्[2] । सर्वमनुष्या इत्यर्थः । किं पप्रे । उच्यते — पुरा पूर्वस्मिन् काले कृताम् कर्म । चिरन्तनानि कर्माणीत्यर्थः । किञ्च इन्द्राग्नी न मर्धतः न हिंस्तः । कम् । सामर्थ्यात् स्तोतारं यारमानं वा परस्परतः ॥ ४ ॥

वेङ्कट० तौ ह्वयामि, ययोः[3] इदम् स्तूयते विश्वम् पुरा कृतम् कर्म । ताविमौ न कञ्चन हिंस्तः ॥ ४ ॥

उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता नो मृळात ईदृशे ॥ ५ ॥

उग्रा । विऽघनिना । मृधः । इन्द्राग्नी इति । हवामहे । ता । नः । मृळातः । ईदृशे ॥ ५ ॥

स्कन्द० उग्रा अप्रसह्यौ विघनिना विविधं हन्तारौ । कान् । उच्यते — मृधः 'मृधः' ( निघ २,१७) इति सङ्ग्रामनाम । तं करोति मृधयति, मृधयतेः क्विप्, मृत्, तान् मृधः । सङ्ग्रामकारिण इत्यर्थः । इन्द्राग्नी हवामहे आह्वयामो वयम् । ता तौ चाहूतौ सन्तौ नः अस्मान् मृळातः मृळयतः ईदृशे प्रार्थनाविशेषे । सप्तमीश्रुतेः वर्तमानानिति शेषः ॥ ५ ॥

वेङ्कट० उग्रौ विशेषेण शत्रून् हन्तारौ इन्द्राग्नी हवामहे । तौ अस्मान्[4] सुखयताम्[5] ईदृशे सङ्ग्रामे ॥ ५ ॥

[6]इति चतुर्थाष्टके अष्टमाध्याये सप्तविंशो वर्गः[6] ॥

हतो वृत्राण्यार्या हतो दासानि सत्पती । हतो विश्वा अप द्विषः ॥ ६ ॥

हतः । वृत्राणि । आर्या । हतः । दासानि । सत्पती इति सत्ऽपती । हतः । विश्वाः । अप । द्विषः ॥ ६ ॥

स्कन्द० हतः[7] मारयत इन्द्राग्नी वृत्राणि शत्रुकुलानि आर्या आर्याणि सदाचाराणि । हतः दासानि उपक्षपयितव्यानि अनार्याणि । यावान् कश्चिच्छत्रुः सर्वं हत इत्यर्थः । सत्पती सतां पालयितारौ । हतः विश्वाः अप द्विषः अपेत्युपसर्गस्य 'हत इत्याख्यातेन'[8] सम्बन्धः । अपहतः सर्वा द्वेष्ट्री रक्षआदिजातीः[9] ॥ ६ ॥

वेङ्कट० आर्यकृतानि उपद्रवाणि[10] नाशयतः दासकृतानि च सत्पती । तथा विश्वान् शत्रून् अप हतम् ॥ ६ ॥

इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत । पिबतं शंभुवा सुतम् ॥ ७ ॥

इन्द्राग्नी इति । युवाम् । इमे । अभि । स्तोमाः । अनूषत । पिबतम् । शम्ऽभुवा । सुतम् ॥ ७ ॥

स्कन्द० हे इन्द्राग्नी ! युवाम् इमे अस्मदीयाः स्तोमाः अभि अनूषत अभिष्टुवन्तः । एतत् ज्ञात्वा पिबतम् हे शंभुवा ! सुखस्य भावयितारौ ! सुतम् अभिषुतम्[11] अस्मदीयं सोमम् ॥ ७ ॥

---

१. पत° मूको. २. सर्वेश मूको. ३. तयोः मूको. ४. °स्मा मूको. ५. सुखेय° वि' ह्रपे, सुखेयता° ल. ६-६. नास्ति मूको. ७. हत मूको. ८-८. हतेत्यास्या° वि°. ९. °जाती मूको. १०. °वान् क प्रस्ताव:. ११. अभिष्टुत° मूको.

वेङ्कट० इन्द्राग्नी! युवाम् इमे स्तोमाः अभिष्टुतवन्तः । पिबतम् हे सुखस्य भावयितारौ! सोमम् ॥ ७ ॥

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरा गतम् ॥८॥

या । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा । इन्द्राग्नी इति । ताभिः । आ । गतम् ॥८॥

स्कन्द० याः वाम् युवयोः सन्ति पुरुस्पृहः बहूनां स्पृहणीयाः । अत्यन्तोत्कृष्टा इत्यर्थः । [1]नियुतः अश्वाः[1] दाशुषे यजमानस्यार्थाय[2] यजमानानुग्रहार्थम्[2] । तं प्रति गन्तुमित्यर्थः । हे नरा! मनुष्याकारौ! इन्द्राग्नी! ताभिः आ गतम् ॥ ८ ॥

वेङ्कट० याः वाम् विद्यन्ते बहुभिः स्पृहणीयाः अश्वाः यजमानानुग्रहार्थम्, नेतारौ! इन्द्राग्नी! ताभिः आ गच्छतम् ॥ ८ ॥

ताभिरा गच्छतं नरोपेदं सवनं सुतम् । इन्द्राग्नी सोमपीतये ॥ ९ ॥

ताभिः । आ । गच्छतम् । नरा । उप । इदम् । सवनम् । सुतम् । इन्द्राग्नी इति । सोमऽपीतये ॥ ९ ॥

स्कन्द० याः पूर्वोक्ता नियुतः, ताभिः आ गच्छतम्[3] नरा । उप इदम्[4] सवनम् [5]उपशब्दोऽत्र प्रतीत्यस्य स्थाने[5] । 'सवनम्' ( निघ ३,१७ ) इति यज्ञनाम । इमं यज्ञं प्रति सुतम् च सोमं प्रति हे इन्द्राग्नी! सोमपीतये सोमपानार्थम् ॥ ९ ॥

वेङ्कट० [6]निगदसिद्धा ॥ ९ ॥

तमीळिष्व यो अर्चिषा वना विश्वा परिष्वजत् । कृष्णा कृणोति जिह्वया ॥१०॥

तम् । ईळिष्व । यः । अर्चिषा । वना । विश्वा । परिऽस्वजत् । कृष्णा । कृणोति । जिह्वया ॥ १० ॥

स्कन्द० विभक्तस्तुतिरियम् अग्नेरेव केवलस्य । तम् ईळिष्व आत्मन एवायमन्तरात्मनः प्रैषः । तं स्तुहि "हे अन्तरात्मन्!", यः अर्चिषा स्वेन ज्योतिषा वना वनानि वृक्षसमूहलक्षणानि विश्वा सर्वाणि परिष्वजत् । व्याप्नोतीत्यर्थः । कृष्णा कृष्णवर्णानि च कृणोति करोति जिह्वया जिह्वास्थानीयया ज्वालया वनानि ॥ १० ॥

वेङ्कट० तम् स्तुहि, यः तेजसा सर्वाणि अरण्यानि दाहभूतः व्याप्नोति[8], कृष्णानि च कृणोति[9] ज्वालया ॥ १० ॥

[10]इति चतुर्थाष्टके अष्टमाध्याये अष्टाविंशो वर्गः[10] ॥

य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः । द्युम्नाय सुतरा अपः ॥ ११ ॥

यः । इद्धे । आऽविवासति । सुम्नम् । इन्द्रस्य । मर्त्यः । द्युम्नाय । सुऽतराः । अपः ॥ ११ ॥

---

१-१. नियुतोऽश्वा वि°. २. °मानमिति स्या° मूको. ३. °मानानुग्र° मूको. ४. गच्छत मूको. ७-७. इन्द्राग्नी वि° अः इन्द्राग्नयः वि°. ५-५. अपेदं मूको. ६-६. उपोऽत्र शब्दोऽत्र प्रतीत्यादस्थाने मूको. ८. व्याप्नो° मूको. ९. नौति मूको. १०-१०. नास्ति मूको.

स्कन्द० ता तौ हुवे आह्वयामि, ययोः इदम् पप्रे । पनति.[1] स्तुत्यर्थः ( द्र. निघ ३,१४ ) । स्तौति विश्वम् सर्वम्[2] सर्वमनुष्या इत्यर्थः । किं पप्रे । उच्यते — पुरा पूर्वस्मिन् काले कृतम् कर्म । चिरन्तनानि कर्माणीत्यर्थः । किञ्च इन्द्राग्नी न मर्धतः न हिंस्तः । कम् । सामर्थ्यात् स्तोतारं वात्मानं वा परस्परतः ॥ ४ ॥

वेङ्कट० तौ ह्वयामि, ययोः[3] इदम् स्तूयते विश्वम् पुरा कृतम् कर्म । ताविमौ न कञ्चन हिंस्तः ॥ ४ ॥

उ॒ग्रा वि॑घ॒निना॒ मृध॑ इन्द्रा॒ग्नी ह॑वामहे । ता नो॑ मृळात ई॒दृशे॑ ॥ ५ ॥

उ॒ग्रा । वि॒ऽघ॒निना॑ । मृधः॑ । इ॒न्द्रा॒ग्नी इति॑ । ह॒वा॒म॒हे॒ । ता । नः॒ । मृ॒ळा॒तः॒ । ई॒दृशे॑ ॥ ५ ॥

स्कन्द०[4] उग्रा अप्रसह्यौ विघनिना विविधं हन्तारौ । कान् । उच्यते — मृधः 'मृधः' ( निघ २,१७ ) इति सङ्ग्रामनाम । तं करोति मृधयति, मृधयतेः क्विप्, मृत्, तान् मृधः । सङ्ग्रामकारिण इत्यर्थः । इन्द्राग्नी हवामहे आह्वयामो वयम् । ता तौ चाहूतौ सन्तौ नः अस्मान् मृळातः सुखयतः ईदृशे प्रार्थनाविशेषे । सप्तमीश्रुतेः वर्तमानाविति शेषः ॥ ५ ॥

वेङ्कट० उग्रौ विशेषेण शत्रून् हन्तारौ इन्द्राग्नी हवामहे । तौ अस्मान्[5] सुखयताम्[6] ईदृशे सङ्ग्रामे ॥ ५ ॥

[7]इति चतुर्थाष्टके अष्टमाध्याये सप्तविंशो वर्गः[7] ॥

ह॒तो वृ॒त्राण्यार्या॑ ह॒तो दासा॑नि॒ सत्प॑ती । ह॒तो विश्वा॒ अप॒ द्विषः॑ ॥ ६ ॥

ह॒तः । वृ॒त्राणि॑ । आर्या॑ । ह॒तः । दासा॑नि । सत्प॑ती॒ इति॒ सत्ऽप॑ती । ह॒तः । विश्वाः॑ । अप॑ । द्विषः॑ ॥ ६ ॥

स्कन्द० हतः[8] मारयत इन्द्राग्नी वृत्राणि शत्रुकुलानि आर्या आर्याणि सदाचाराणि । हतः दासानि उपक्षपयितव्यानि अनार्याणि । पापान् कश्चिच्छत्रुः सर्वं हत इत्यर्थः । सत्पती सतां पालयितारौ । हतः विश्वा अप द्विषः अपेरुपसर्गोऽयम् 'हत इत्याख्यातेन' सम्बन्धः । अपहतः सर्वा द्वेष्ट्री रक्षआदिजातीः[9] ॥ ६ ॥

वेङ्कट० आर्यकृतानि उपद्रवाणि[10] नाशयतः दासकृतानि च सतामीश्वरौ । तथा 'विश्वानेव शत्रून् अप हतम् ॥ ६ ॥

इन्द्रा॑ग्नी यु॒वामि॒मे॒३॒॑ऽभि स्तोमा॑ अनूषत । पिब॑तं शंभुवा सु॒तम् ॥ ७ ॥

इन्द्रा॑ग्नी॒ इति॑ । यु॒वाम् । इ॒मे । अ॒भि । स्तोमाः॑ । अ॒नू॒ष॒त॒ । पिब॑तम् । श॒म्ऽभु॒वा॒ । सु॒तम् ॥ ७ ॥

स्कन्द० हे इन्द्राग्नी ! युवाम् इमे अस्मदीयाः स्तोमाः अभि अनूषत अभिष्टुतवन्तः । एतत् ज्ञात्वा पिबतम् हे शंभुवा ! सुखस्य भावयितारौ ! सुतम् अभिषुतम्[11] अस्मदीयं सोमम् ॥ ७ ॥

---

१. पन° मूको. २. सर्वंत मूको. ३. तयोः मूको. ४. °त्मा मूको. ५. सुखेय° वि° सप°; सुखेयत° ल. ६-६. नास्ति मूको. ७. ८८ मूको. ८-८. हतेत्यास्या° वि°. ९. °जाती मूको. १०. °वाद्. ल पद्मावः. ११. अभिष्टुत° मूको.

वेङ्कट० इन्द्राग्नी! युवाम् इमे स्तोमाः अभिष्टुतवन्तः । पिबतम् हे सुखस्य भावयितारौ! सोमम् ॥ ७ ॥

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरा गतम् ॥८॥

या । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा । इन्द्राग्नी इति । ताभिः । आ । गतम् ॥८॥

स्कन्द० याः वाम् युवयोः सन्ति पुरुस्पृहः बहूनां स्पृहणीयाः । अत्यन्तोत्कृष्टा इत्यर्थः । [1]नियुतः अश्वाः[1] दाशुषे यजमानस्यार्थाय[2] यजमानानुग्रहार्थम्[3] । तं प्रति गन्तुमित्यर्थः । हे नरा! मनुष्याकारौ! इन्द्राग्नी । ताभिः आ गतम् ॥ ८ ॥

वेङ्कट० याः वाम् विद्यन्ते बहुभिः स्पृहणीयाः अश्वाः यजमानानुग्रहार्थम्, नेतारौ! इन्द्राग्नी! ताभिः आ गच्छतम् ॥ ८ ॥

ताभिरा गच्छतं नरोपेदं सवनं सुतम् । इन्द्राग्नी सोमपीतये ॥ ९ ॥

ताभिः । आ । गच्छतम् । नरा । उप । इदम् । सवनम् । सुतम् । इन्द्राग्नी इति । सोमऽपीतये ॥ ९ ॥

स्कन्द० याः पूर्वोक्ता नियुतः, ताभिः आ गच्छतम्[4] नरा! [5]उप इदम्[5] सवनम् [6]उपशब्दोऽत्र प्रतीत्यस्य स्थाने[6] । 'सवनम्' ( निघ ३,१७ ) इति यज्ञनाम । इमं यज्ञं प्रति सुतम् च सोमं प्रति हे इन्द्राग्नी! सोमपीतये सोमपानार्थम् ॥ ९ ॥

वेङ्कट० निगदसिद्धा ॥ ९ ॥

तमीळिष्व यो अर्चिषा वना विश्वा परिष्वजत् । कृष्णा कृणोति जिह्वया ॥१०॥

तम् । ईळिष्व । यः । अर्चिषा । वना । विश्वा । परिऽस्वजत् । कृष्णा । कृणोति । जिह्वया ॥ १० ॥

स्कन्द० विभक्तस्तुतिरियम् अग्नेरेव केवलस्य । तम् ईळिष्व आत्मन एवायमन्तरात्मनः प्रैषः । तं स्तुहि [7]हे अन्तरात्मन्![7], यः अर्चिषा स्वेन ज्योतिषा वना वनानि वृक्षसमूहलक्षणानि विश्वा सर्वाणि परिष्वजत् । व्याप्नोतीत्यर्थः । कृष्णा कृष्णवर्णानि च कृणोति करोति जिह्वया जिह्वास्थानीयया ज्वालया वनानि ॥ १० ॥

वेङ्कट० तम् स्तुहि, यः तेजसा सर्वाणि अरण्यानि दावभूतः व्याप्नोति[8], कृष्णानि च कृणोति[9] ज्वालया ॥ १० ॥

[10]इति चतुर्थाष्टके सप्तमाध्याये अष्टाविंशो वर्गः[10] ॥

य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः । द्युम्नाय सुतरा अपः ॥ ११ ॥

यः । इद्धे । आऽविवासति । सुम्नम् । इन्द्रस्य । मर्त्यः । द्युम्नाय । सुऽतराः । अपः ॥ ११ ॥

---

१-१. नियुतोऽश्वा वि°. २. "मानविरि द्या" मूको. ३. 'मानानुग्रह' मूको. ४. गच्छत मूको. ५-५. मपेदं मूको. ६-६. उपोऽत्र शब्दोऽत्र प्रतीत्यस्थाने मूको. ७-७. हन्तरात्मन् वि° अ; हन्तरात्मनः वि°. ८. व्याप्नो° मूको. ९. नोति मूको. १०-१०. नास्ति मूको.

यष्टृभ्यो दातारौ इषाम् अन्नानाम् रयीणाम् धनानां च। उभौ वाजस्य हविर्लक्षणस्य अन्नस्य [1]सातये सम्भजनाय हुवे आह्वयामि वाम् युवाम्[1] ॥ १३ ॥

वेङ्कट० उभौ वाम् इन्द्राग्नी! [2]घृतेन आहोतुम्[2] ह्वयामि सोमेन सह मादयितुम्। उभौ हि युवाम् दातारौ अन्नानां धनानां च। तथा सति उभौ वाम् अन्नस्य लाभाय ह्वयामि[3] ॥ १३ ॥

आ नो गव्येभिरश्व्यैर्वसव्यैरुप गच्छतम्

सखायौ देवौ सख्याय शम्भुवेन्द्राग्नी ता हवामहे ॥ १४ ॥

आ। नः। गव्येभिः। अश्व्यैः। वसव्यैः। उप। गच्छतम्।

सखायौ। देवौ। सख्याय। शम्ऽभुवा। इन्द्राग्नी इति। ता। हवामहे ॥ १४ ॥

स्कन्द० [4]नः अस्मान् गव्येभिः[4] गोसमूहैः अश्व्यैः अश्वसमूहैः वसव्यैः वसुसमूहैश्च सह उप आ गच्छतम्। [5]अस्मभ्यं दातुं गवाश्ववसुसमूहान्[5] गृहीत्वाऽस्मत्समीपम् आगच्छतमित्यर्थः[5]। [6]परोक्षकृत उत्तरोऽर्धर्चः। यच्छब्दश्रुतेः[6] यच्छब्दोऽध्याहर्तव्यः। यौ देवौ सखायौ वयस्यौ परस्परस्य संवर्धमानानां वा शम्भुवा सुखस्य भावयितारौ सख्याय [7]सखिभावाय। अस्माभिः ऋत्विग्भिः सह सखित्वार्थमित्यर्थः[8]। इन्द्राग्नी ता तौ हवामहे आह्वयामो वयम् ॥ १४ ॥

वेङ्कट० उप आ गच्छतम् अस्मान् गवादिसमूहैः। समानख्यानौ देवौ सख्यसिद्ध्यर्थं सुखस्य भावयितारौ तौ[9] इन्द्राग्नी ह्वयामहे ॥ १४ ॥

इन्द्राग्नी शृणुतं हवं यजमानस्य सुन्वतः।

वीतं हव्यान्या गतं पिबतं सोम्यं मधु ॥ १५ ॥

इन्द्राग्नी इति। शृणुतम्। हवम्। यजमानस्य। सुन्वतः।

वीतम्। हव्यानि। आ। गतम्। पिबतम्। सोम्यम्। मधु ॥ १५ ॥

स्कन्द० हे इन्द्राग्नी! शृणुतम् हवम् आह्वानम् यजमानस्य मद्द्वाजाख्यस्य सुन्वतः सोमम् अभिषुण्वतः। [10]कामयिता वीतम् कामयेथां तदीयानि[10] [11]हव्यानि हवींषि सवनीयपुरोडाशादीनि[11]। [12]युवा च आ गतम् आगच्छतम्, पिबतम् च सोम्यम् सोममयम् मधु माध्वीक मधुस्थानीयम् ॥ १५ ॥

वेङ्कट० निगदसिद्धेति ॥ १५ ॥

[12]इति चतुर्थाष्टके अष्टमाध्याये एकोनत्रिंशो वर्गः[12] ॥

---

१-१. सातये मूको. २. हो° वि[a] अर्प. ३. आह्व° वि[a] अर्प. ४-४. ...गव्येभिः वि[a], मूको. ५. तम् मूको. ५-५. अस्मभ्य...यान्° मूको. ६. °यच्छ्ब्द मूको. ६-६. परो...श्रुते° मूको. ७. ...°सखि वि[a]. ८-८. सखित्वा...र्थः मूको. ९. तौ मूको. १०-१०. ...मूको. ११-११. ...°दीनि वि[a]. १२-१२. नास्ति मूको.

# [ ६१ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः। सरस्वती देवता। गायत्री छन्दः,
आद्यास्तिस्रः त्रयोदशी च जगत्यः, चतुर्दशी त्रिष्टुप्[1]।

इयमददाद् रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ १ ॥

इयम् । अददात् । रभसम् । ऋणऽच्युतम् । दिवःऽदासम् । वध्रिऽअश्वाय । दाशुषे ।
या । शश्वन्तम् । आऽचखाद । अवसम् । पणिम् । ता । ते । दात्राणि । तविषा । सरस्वति ॥१॥

स्कन्द० [2]‘सूक्तमेकम् सरस्वतीम्’। द्वितीयानिर्देशात् स्तौतीति शेषः[2]। [3]यां षळक्षरां सप्तशीर्षी चतुष्पदा भूतभर्त्री सुभगां वेदमातरं वाचम् अनेन प्रतिपादयति। यास्मि[4] गायत्रीरूपा षडक्षरैश्चतुर्भिः पादैः। [5]षडक्षरा चतुष्पदा। सप्तव्याहृतिरूपैः शीर्षैः[5] सप्तशीर्षी। सर्वभूतानां च स्तनयित्नु-लक्षणेनात्मना[6] वृष्टिप्रदानद्वारेण भर्त्री। वृष्ट्युदकलक्षणेनैव धनेन सुभगा। भग इति हि [7]धननाम वा, यशोविद्यैश्वर्याणि[7] सुष्ठु सेव्यते तेन सुभगा। वेदानां च मातृभूता उपनीतस्य प्रथमम् अनूच्यमानत्वात् वेदजन्मानि मातृत्वेन ‘स्मरणाद् अतोऽस्या मातृत्वम्’ इति। [8]अत्रेतिहासमाचक्षते—वध्र्यश्वं किल[8] तीव्रेण तपसा स्वर्गमारुरुक्षन्तम् देवदूता ऊचुः ‘नापुत्रस्य स्वर्गोऽस्ति। पुत्रम् उत्पादय[9] जनयेति। स पुत्रार्थं सरस्वतीम् आराधयाञ्चकार[9] तस्मै सरस्वती पुत्रम् अददात् इति। तदेतदाह—‘इयमददात्’ इति। ………। इयम् सरस्वती अददात्[10] दत्तवती रभसम् महान्तम् ऋणच्युतम् च्यावयितारमृणानाम्। यैस्त्रिभिर्ऋणैः ऋणवान् जायते, यज्ञेन देवेभ्यः प्रजया [11]पितृभ्यः ब्रह्मचर्येण ऋषिभ्य इति, तेषां च्यावयितारम्। यष्टारम् पुत्रिणम्[11] [12]ब्रह्म चारिणम्[12] चेत्यर्थः। दिवोदासम् नाम पुत्रम् वध्र्यश्वाय[13] ऋषये दाशुषे हवींषि दत्तवते। [14]परोऽर्धर्चः प्रत्यक्षकृतत्वात्[14] [15]भिन्नं वाक्यम्[15] ॥ १ ॥

वेङ्कट० इयम् प्रायच्छत् वेगवन्तम् ऋणस्य च्यावयितारम्[16] पुत्रम् दिवोदासम्[17] नाम वध्र्यश्वनाम्ने यजमानाय। या इयं बहुकालदर्शिनम् असुरम् आचखाद जघान। प्रत्यक्षस्तुरीयः पादः। तान्यपि[18] महान्ति तव दानानि प्रवृद्धानि सरस्वति ॥ १ ॥

इयं शुष्मेभिर्बिसखा इवारुजत् सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥ २ ॥

---

१-१. नास्ति मूको. २-२. इदं ६,६०१५ मन्त्रभाष्ये प्रमादात् पतितम्, तदिदं स्थापयित्वा ‘शेषः’ इति निवेशितम्. ३. …तषळक्षरा मूको. ४. वाक्यि म; वाचि वि[1]; वा… वि[2]. ५-५. षडक्षरा-चतुष्पद … मूको. ६. °शुभनश्च° मूको. ७-७. °नाम…याज्ञविद्धि° मूको. ८-८. °तादयस्य गा…किल मूको. ९. पकार…मूको. १०. अददत् वि[1]. ११-११. पि…पुत्रिणं वि[1] म; पितृभ्यः…पुत्रिणं वि[2]. १२-१२. ब्रह्मचर्येन मूको. १३. वध्र्यश्वाय वि[1]. १४-१४. परोऽर्धर्चं° मूको. १५-१५. भिन्नव… मूको. १६. च्याव° म; च्यावयि° ह्र्स. १७. °दास ह ह्र्स. १८. °ष्वा क ह्र्स.

इयम् । शुष्मेभिः । बिसखाःऽइव । अरुजत् । सानु । गिरीणाम् । तविषेभिः । ऊर्मिऽभिः ।
पारावतऽघ्नीम् । अवसे । सुवृक्तिऽभिः । सरस्वतीम् । आ । विवासेम । धीतिऽभिः ॥ २ ॥

स्कन्द० ......... तथा च शाकपूणिना[1] मन्त्रमभिधायिनः सरस्वतीशब्दस्य परिगणने — अथैषा नदी[2] चत्वार एव तस्या निगमा भवन्ति । 'दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि' (ऋ ३, २३,४) 'चित्र इद्राजा राजका इदन्यके यके सरस्वतीमनु' (ऋ ८,२१,१८) 'इमं मे गङ्गे यमुने सरस्वति' (ऋ १०,७५,५), 'सरस्वती सरयुः सिन्धुरूर्मिभिः' (ऋ १०,६४,९)। अत्राय न षष्ठः परिगणित पञ्चममप्युदाहरति —'अम्बितमे नदीतमे' (ऋ २,४१,१६) इति । २ ॥[3]

वेङ्कट० इयम् बलैः बिसस्य खनितेव रुजति[4] सानु शिलोच्चयानाम्, प्रवृद्धैः ऊर्मिभिः । पारावार-घातिनी पारावतघ्नी इति यास्कः (द्र. या २,२४)। कूलयोरुभयोर्भङ्क्त्रीमित्यर्थः । ताम् रक्षणाय स्तुतिभिः सरस्वतीम् कर्मभिश्च परिचरेम ॥ २ ॥

सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः ।
उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥ ३ ॥

सरस्वति । देवऽनिदः । नि । बर्हय । प्रऽजाम् । विश्वस्य । बृसयस्य । मायिनः ।
उत । क्षितिऽभ्यः । अवनीः । अविन्दः । विषम् । एभ्यः । अस्रवः । वाजिनीऽवति ॥ ३ ॥

स्कन्द० हे सरस्वति! देवनिदः देवानां निन्दकान् नि बर्हय 'निबर्हयति' (निघ २,१९) वधकर्मा । जहि, प्रजाम् अपत्यानि च विश्वस्य सर्वस्य बृसयस्य बृसयनाम्नोऽसुरजातिविशेषस्य मायिनः मायावतः । उत क्षितिभ्य क्षितयो मनुष्याः तदर्थम् अवनीः नदीः अविन्दः विन्दतिर्लाभार्थः, सामर्थ्याच्च अन्तर्णीतण्यर्थः । लम्भय[5] । किम् । सामर्थ्याद् उदकम् । नदीरप्युदकेनापूरयेत्यर्थः । विषम् उदकनामैतत् (द्र. निघ १,१२) । उदकं च सस्यनिष्पत्त्यर्थम् एभ्यः एषां मनुष्याणामर्थाय अस्रवः । वर्षेत्यर्थः । हे वाजिनीवति! वाजो बलं वेगो वा तद्वती वाजिनी सरस्वत्याः सेना, तद्वती । अथवा वाजो हविर्लक्षणमन्नं तदस्यामस्ति सा वाजिनी याग इत्यर्थः, तद्वती । अथवा वाजिनीशब्दो वाजशब्दस्य पर्यायः । वाजवती अन्नवती ॥ ३ ॥

वेङ्कट० हे सरस्वति! देवानां निन्दितॄन् असुरान् नि बर्हय, प्रजाम् च व्याप्तस्य बृसयनाम्नो वृत्रपितुः मायाविनः । अपि च[6] प्रजाभ्यः क्षेत्राणि अलभय उदकम् एभ्यः अस्रवः अन्नपति! ॥ ३ ॥

प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ ४ ॥

प्र । नः । देवी । सरस्वती । वाजेभिः । वाजिनीऽवती । धीनाम् । अवित्री । अवतु ॥ ४ ॥

---

१. शाकपू° वि[1] अ, शाकपू° वि[2]. २. °नदी मूको. ३. ३ मितःप्रभृतिस्थलीयं स्कन्दस्वामिभाष्यम् (२,२४). ४. रुज° मूको. ५. ...लय मूको. ६. नास्ति वि[3] वर्ग.

स्कन्द० प्रेत्युपसर्गोऽवतिक्रियाव्यवधानेन सम्बन्धयितव्यः। नः अस्मान् देवी सरस्वती वाजेभिः वाजिनीवती[1] वाजशब्दोऽत्र बलनाम। सेनालक्षणैर्बलैर्बलवती। अथवा वाज इत्यन्ननाम[2] यानि सरस्वती स्तोतृभ्यो ददाति हविर्लक्षणानि, तैरन्नैरन्नवती। धीनाम् प्रज्ञानां कर्मणां वा अवित्री पालयित्री प्र अवतु प्रकर्षेण रक्षतु ॥ ४ ॥

वेङ्कट० प्र अवतु अस्मान् देवी सरस्वती अन्नैः अन्नवती कर्मणाम् अवित्री ॥ ४ ॥

यस्त्वा देवि सरस्वत्युपब्रूते धने हिते। इन्द्रं न वृत्रतूर्ये ॥ ५ ॥

यः। त्वा। देवि। सरस्वति। उपऽब्रूते। धने। हिते। इन्द्रम्। न। वृत्रऽतूर्ये ॥ ५ ॥

स्कन्द० यः स्तोता त्वां हे देवि! सरस्वति! उपब्रूते उपगम्य ब्रवीति। स्तौतीत्यर्थः। धने हिते शुद्धोऽप्ययं दधातिर्निपूर्वत्वे द्रष्टव्यः। हविर्लक्षणे धने 'वेद्यां निहिते'। उपकल्पितहविष्क सन्नित्यर्थः। अथवा धने हित इति हितशब्द उपकारकवचनः[3]। 'निमित्तात्कर्मसंयोगे' (पावा २, ३, ३६) इत्येवं चैषा सप्तमी, 'चर्मणि द्वीपिनं हन्ति' इति यथा। यद्धनम् उपकारकं तदर्थमित्यर्थः। कथम् इन्द्रम् न इन्द्रमिव[4] वृत्रतूर्ये सङ्ग्रामे। तमित्यध्याहृत्यैकवाक्यता[5] योज्या। यः[6] उपब्रूते, तम् 'रक्षेति शेषः'[7] ॥ ५ ॥

वेङ्कट० यः त्वा देवि! सरस्वति[8] उपस्तौति हितधननिमित्तम् इन्द्रम् इव सङ्ग्रामे, तं रक्षेति ॥ ५ ॥

'इति चतुर्थाष्टके अष्टमाध्याये त्रिंशो वर्गः'[8] ॥

त्वं देवि सरस्वत्यवा वाजेषु वाजिनि। रदा पूषेव नः सनिम् ॥ ६ ॥

त्वम्। देवि। सरस्वति। अव। वाजेषु। वाजिनि। रद। पूषाऽइव। नः। सनिम् ॥ ६ ॥

स्कन्द० त्वम् हे देवि! सरस्वति! अव पालय वाजेषु वाजिनि!। किञ्च रद रद विलेखनेऽन्यत्र इह तु सामर्थ्याद् दानार्थः। देहि पूषा इव यथा पूषा ददद् नः अस्मभ्यम् सनिम् दानम्। अथवा रदतिर्विलेखनार्थ एव। नः इति तु तादर्थ्ये चतुर्थी। विलिख अस्मदर्थं धनम्। 'यत्ते धनं' निखातमास्ते तदस्मभ्यमुत्खनेत्यर्थः ॥ ६ ॥

वेङ्कट० त्वम् देवि! सरस्वति! रक्ष सङ्ग्रामेषु। अन्नवति! देहि[10] पूषा इव स्तोतृभ्यः अस्मभ्यम् धनम् ॥ ६ ॥

उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः। वृत्रघ्नी वष्टि सुष्टुतिम् ॥ ७ ॥

उत। स्या। नः। सरस्वती। घोरा। हिरण्यऽवर्तनिः। वृत्रऽघ्नी। वष्टि। सुऽस्तुतिम् ॥ ७ ॥

---

1. 'नीवति' मूको. 2. इत्यन्नाम वि'. 3-3. वेद्या नहिते वि' अ. 4. 'कारव' मूको. 5. 'ध्यव मूको. 6. इव'''ध्याह' मूको. 7. नास्ति मूको. 8-8. नास्ति मूको. 9-9. सवेभ वि', यो'ते ध अ, यो'ते ध''' वि' 10. धेहि वि' अ'.

उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या भूत् ॥ १० ॥

उत । नः । प्रिया । प्रियासु । सप्तऽस्वसा । सुऽजुष्टा । सरस्वती । स्तोम्या । भूत् ॥ १० ॥

स्कन्द० अस्माकम् प्रिया प्रियासु । निर्धारण एषा सप्तमी । याः काश्चन प्रियास्तासां मध्येऽतिशयेन प्रिया सप्तस्वसा सप्त अन्याया अन्तरिक्षनद्यः वा भगिन्यो यस्याः सा सप्तस्वसा । अथवा सप्त छन्दांसि भगिन्यो यस्या गायत्रीरूपायाः सा सप्तस्वसा सुजुष्टा सुप्रीता सरस्वती स्तोम्या स्तोमार्हा स्तोतव्या भूत् नित्यं यज्ञेषु भूयादित्याशास्महे ॥ १० ॥

वेङ्कट० अपि च अस्माकम् प्रियासु प्रिया अत्यन्तं प्रिया सप्त गङ्गाद्या यस्याः स्वसारः सा[1] सुपर्याप्ता सरस्वती स्तोतव्या भवतु ॥ १० ॥

[1]इति चतुर्थाष्टके अष्टमाध्याये एकत्रिंशो वर्गः[1] ॥

आपप्रुषी पार्थिवान्युरु रजो अन्तरिक्षम् । सरस्वती निदस्पातु ॥ ११ ॥

आऽपप्रुषी । पार्थिवानि । उरु । रजः । अन्तरिक्षम् । सरस्वती । निदः । पातु ॥ ११ ॥

स्कन्द० आपप्रुषी[2] प्रा पूरणे । आपूरितवती[2] आपूरयन्ती वा वृष्ट्युदकेन स्तनितशब्देन वा पार्थिवानि पृथिव्या अवयवभूतानि स्थानानि "उरु रजः" विस्तीर्णं च लोकम् । कतमम् । उच्यते — अन्तरिक्षम् । सरस्वती निदः निन्दितात्[3] निन्दातो वाऽस्मान् पातु रक्षतु ॥ ११ ॥

वेङ्कट० आपूरयन्ती[3] पार्थिवानि भूतानि विस्तीर्णम् लोकम् स्वर्गम् अन्तरिक्षम् च सरस्वती शत्रोः रक्षतु ॥ ११ ॥

त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्या भूत् ॥ १२ ॥

त्रिऽसधस्था । सप्तऽधातुः । पञ्च । जाता । वर्धयन्ती । वाजेऽवाजे । हव्या । भूत् ॥ १२ ॥

स्कन्द० त्रिषधस्था त्रिषु लोकेषु सहस्थाना त्रिषधस्था । युगपत् त्रयाणामपि लोकानां व्यापिकेत्यर्थः । सप्तधातुः लोके शरीरादेः कारणे श्लेष्मादौ धातुशब्दः प्रसिद्धः, धातुवैषम्यं देवदत्तस्य जातमिति । अतोऽत्र धातुशब्दः[4] कारणवचनः । सप्तानां छन्दसां कारणभूता । गायत्रीरूपा हि सरस्वती सप्तानां छन्दसां कारणभूता । पञ्च जाता पञ्च मनुष्यजातानि[5] निषादपञ्चमान् वर्णान् वृष्टिद्वारेण वर्धयन्ती वाजेवाजे सङ्ग्रामेसङ्ग्रामे अस्माकम् हव्या आह्वानार्हा अनुग्राहिका भूत् भवेदित्याशास्महे । अथवा वाजो हविर्लक्षणमन्नम्, अत्र सर्वत्राह्वातव्या भवतु । सारस्वतमेव यागं नित्यं कुर्यामेत्याशास्महे इत्यर्थः ॥ १२ ॥

वेङ्कट० त्रिस्थाना सप्तधातुः सप्तभिश्छन्दोभिः सहिता सप्तभिर्वा स्वसृभिः पञ्च जनान् वर्धयन्ती सङ्ग्रामेसङ्ग्रामे ह्वातव्या भवति ॥ १२ ॥

---

१. नास्ति मूको. २-२. नास्ति मूको. ३. आपूरवती मूको. ४-४. नास्ति मूको. ५. निन्दि ४ मूको. ६. °यन्ति मूको. ७. मनुष्याजातानि मूको.

च भवेत्यर्थः । मा च त्वत् त्वत्तः क्षेत्राणि स्थानानि अरणानि त्वद्विरहितत्वादेव अरमणीयानि[1] गन्म गमाम । वयं सर्वदा त्वत्पादमूल एव तिष्ठेमेत्येतदाशास्महे[2] इत्यर्थः ॥ १४ ॥

यदभीविविवास्येताम् ऋगर्थागमसंहृतिम्[3] । भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ॥

इति भर्तृध्रुवपुत्रस्य स्कन्दस्वामिनः कृतावृग्वेदभाष्ये द्वात्रिंशोऽध्यायः[4] ॥

वेङ्कट० हे सरस्वति अभि नय अस्मान् अभ्युदयम् । मा अप स्फरीः उदकेन । सेतौ विभिन्ने अपस्फरणं भवति । मा च अस्मान् धाक्षीः उदकाभावात् । सेवस्व अस्मान् सखित्वेन निवेशनेन च मा त्वत् क्षेत्राणि उदकाभावाद् अरमणीयानि[1] गन्म इति ॥ १४ ॥

[5]इति चतुर्थाष्टके अष्टमाध्याये द्वात्रिंशो वर्गः[5] ॥

ऋगर्थदीपिका सेयं चतुर्थस्याष्टमाष्टके ।
कर्ता श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः ॥ १ ॥

माधवेन कृतं भाष्यं चतुर्थस्याष्टकस्य यत् ।
नारायणेन लिखितं तदन्तो देवशर्मणा ॥ २ ॥

वेदो नाम महत् पदं जनपदो यत्र द्विजानां वति-
स्तस्मिन् वेदमधीत्य वाच्यमखिलं मीमांसतेऽस्य स्फुटम् ।
तत्र[6] ग्रामवरे कयाचिन्निवसता नाम्ना च नारायणे-
नैतन्माधवभाष्यलेखनवशाद् वैदग्ध्यमाविष्कृतम्[7] ॥ ३ ॥

इति श्रीवेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके अष्टमोऽध्यायः ॥

— * —

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके अष्टमोऽध्यायः ॥

चतुर्थाष्टकः समाप्तः ॥



१. अरमणीयानि मूको. २. °मेतदाशास्महे° मूको. ३. °संहृतिम् ख. ४. °यः समाप्तः ख.
५-५. नास्ति मूको. ६. अत्र दर्श. ७. °तम् । श्रीगणपतये नमः । गोपालकृष्णाय नमः । सरस्वत्यै नमः । वेदव्यासाय नमः । गुरवे नमः दर्श.

वेङ्कट० यौ[1] नवतरस्य स्तुवतः स्तुतिम् उपभवथः रथे नियुज्यमानाश्वौ उदकं सम्पर्चनीयम्[2] भक्षं रसं[3] च वहन्तौ । होता[4] यक्षत्[5] पुराणः द्रोहवर्जितौ युवानौ यावत् शुभम् । ४ ।

ता वल्गू दस्रा पुरुशाकतमा प्रत्ना नव्यसा वचसा विवासे ।
या शंसते स्तुवते शम्भविष्ठा बभूवतुर्गृणते चित्रराती ॥ ५ ॥

ता । वल्गू इति । दस्रा । पुरुशाकऽतमा । प्रत्ना । नव्यसा वचसा । आ । विवासे ।
या । शंसते । स्तुवते । शम्ऽभविष्ठा । बभूवतुः । गृणते । चित्ररातीइति चित्रऽराती ॥ ५ ॥

स्कन्द० तौ वल्गू । वल्गूयतेरर्चतिकर्मणः ( तु. निघ ३,१४ ) पृतद्रूपम् । प्रियवचनो वा वल्गुशब्दः । स्तुत्यौ प्रियौ वा सर्वस्य । दस्रा दस्रनामानौ । अन्यतरनाम्ना चेदं साहचर्यादुभयोरभिधानम् । अथवा दसि दर्शनदंसनयोः[4] दसु उपक्षये दस्यु च इत्यनयोरन्यतरक्रियाशब्दो[5] दस्रशब्दः । दर्शनीयौ उपक्षपयितारौ वा शत्रूणाम् पुरुशाकतमा । शाकः शक्तिः । अतिशयेन बहुशक्तिकौ प्रत्ना पुराणौ नव्यसा अतिशयेन नवेन स्तोत्रेण वा वचसा स्तुतिलक्षणेन वचनेन आ विवासे परिचरामि[7] । स्तौमीत्यर्थः । यौ किं कुरुतः । उच्यते—या यौ शंसते स्तुवते । शंसितारौ उभावपि स्तोतारौ[8] । तयोरेकः शस्त्रविषयः, अपरः स्तोत्रविषयश्च । शस्त्रैः स्तोत्रैश्च स्तुतिं कुर्वते[9] शम्भविष्ठा अतिशयेन सुखस्य भावयितारौ बभूवतुः भवतः । गृणते अन्याभिश्च यजुरादिस्तुतिभिः स्तुवते चित्रराती विचित्रदानौ ॥ ५ ॥

वेङ्कट० तौ वल्गनशीलौ वीरौ दर्शनीयौ अतिशयेन बहुसहायौ प्रत्नौ[10] नवतरेण वचसा परिचरामि, यौ शंसते स्तुवते च अतिशयेन सुखस्य भावयितारौ[11] बभूवतुः, गृणते मह्यं च चित्रदानौ ॥ ५ ॥

[12]इति पञ्चमाष्टके प्रथमाध्याये प्रथमो वर्गः[13] ॥

ता भुज्युं विभिरद्भ्यः समुद्रात् तुग्रस्य सूनुमूहथू रजोभिः ।
अरेणुभिर्योजनेभिर्भुजन्ता पतत्रिभिरर्णसो निरुपस्थात् ॥ ६ ॥

ता । भुज्युम् । विऽभिः । अत्ऽभ्यः । समुद्रात् । तुग्रस्य । सूनुम् । ऊहथुः । रजःऽभिः ।
अरेणुऽभिः । योजनेभिः । भुजन्ता । पतत्रिऽभिः । अर्णसः । निः । उपऽस्थात् ॥ ६ ॥

स्कन्द० मन्त्रेतिहासमाचष्टे—भुज्युं नाम राजपुत्रं समुद्रे विपन्ननावं सखायस्तत्यजुरिति । वसिष्ठो ऽप्याह 'उत त्यं भुज्युमश्विना सखायः' ( ऋ ७,६८,७ ) इति । तमश्विनौ नौभिरश्वैः रथैश्चोत्तारितवन्ताविति, काक्षीवतोक्तम् 'तुग्रो ह भुज्युमश्विनोदमेघे' ( ऋ १,११६,३ ) इत्यादिना । तदेवेहानूच्यते—यावुक्तगुणौ स्तः, तौ युवाम् भुज्युम् नाम राजपुत्रम् अद्भ्यः उदकेभ्यः । न च यतः कुतश्चित् । किं तर्हि समुद्रात् । तुग्रस्य[14] तुग्रनाम्नो राज्ञः सूनुम्

1. तेन मूको. 2. संपर्चं वि[1] स छम. 3-3. नास्ति वि[1] अ[1]. 4. यक्षत् छ छम; नास्ति वि[1] अ[1]. 5. दंसन ( °स वि[1]. ) दर्शनयोः मूको. 6. °शब्दः कि[1] मूको. 7. परि च…मि मूको. 8. स्तु[1] वि[1] अ; स्तोतृ वि[1]. 9. …न मूको. 10. प्रत्नौ मूको. 11. भावि[2]° मूको. 12-13. नास्ति मूको. 14. तुग्रस्य मूको.

पुत्रम् ऊहथुः । यद्वेदिदं रूपम् । निरुपस्थादिति [1]च निःशब्दः[1] उपसर्गोऽनेन आख्यातेन सम्बन्धयितव्यः । निरूहथुः[2] । उत्तारितवन्तौ स्थ इत्यर्थः । केन । उच्यते — विभिः वेतिर्गत्यर्थः । गन्तृभिरश्वैः रजोभिः ज्योतिरत्र रज उच्यते । सामर्थ्याच्चान्तर्णीतमत्वर्थः । ज्योतिष्मद्भिः[3] । स्वदीप्त्या दीप्तैरित्यर्थः । अरेणुभिः[4] धूलिवर्जितैः अमलिनैरित्यर्थः । योजनेभिः योजनस्वभावकैः पतत्रिभिः पतत्रिणः पक्षिणः तत्सदृशैः अत्यन्तशीघ्रगतिभिः । [5]किं चिकीर्षन्तौ[5] उत्तारितवन्तौ । उच्यते — [6]भुजन्ता भुजिः सामर्थ्यादन्तर्णीतसनर्थः[6] । पालयितुमिच्छन्तौ । कम् । सामर्थ्यात् तमेव भुज्युम् । कीदृशात्[7] समुद्रात् । उच्यते अर्णसः उपस्थात् अर्णः उदकम् तत्रोपगम्य[8] तिष्ठति स तदुपस्थः तस्मात् । सर्वं[9] हि नद्यादुदकं समुद्रमुपगम्य तिष्ठति ॥ ६ ॥

वेङ्कट० तौ भुज्युम् अश्वैः [10]समुद्रमध्यस्थाम्भः अद्भ्यः[10] तुग्रस्य पुत्रम् ऊहथुः[11] मार्गैः । [12]तदेवाऽऽह — रेणुवर्जितैः मार्गैः[13] तुग्रसूनुं रक्षन्तौ अश्वैः उदकमध्यात् निरूह्योहथुरिति ॥ ६ ॥

वि ज॒यु॒षा॑ र॒थ्या॒ या॒त॒मद्रिं॑ श्रु॒तं हवं॑ वृषणा वध्रिम॒त्याः ।
द॒शस्य॑न्ता श॒यवे॑ पिप्यथु॒र्गामिति॑ च्यवाना सुम॒तिं भु॑रण्यू ॥ ७ ॥

वि । ज॒यु॒षा॑ । र॒थ्या॒ । या॒त॒म् । अद्रि॑म् । श्रु॒तम् । हव॑म् । वृ॒ष॒णा॒ । व॒ध्रि॒ऽम॒त्याः ।
द॒श॒स्य॑न्ता । श॒यवे॑ । पि॒प्य॒थुः॒ । गाम् । इति॑ । च्य॒वा॒ना॒ । सु॒ऽम॒तिम् । भु॒र॒ण्यू॒ इति॑ ॥ ७ ॥

स्कन्द० जयुषा जेत्रा रथेन हे रथ्या! रथस्य वोढारौ! । दुर्गमेष्वपि देशेषु स्वरथस्य प्रापयिता- रावित्यर्थः । वि यातम् विविधं गच्छथो युवाम् अद्रिम् मेघं प्रति । श्रुतम् श्रुतवन्तौ च स्थः । सा हवम् आह्वानं हे वृषणा! वर्षितारौ! वध्रिमत्याः वध्रिमती नाम योद्ध्री स्त्री तस्याः । सा हि सङ्ग्रामे शत्रुभिः छिन्नहस्ता अश्विनावाहूतवतीत्यस्या अश्विनावाह्वानं श्रुत्वा हिरण्मयहस्तं बाहुं दत्तवन्तौ । यदेतद् कक्षीवतोक्तम् — 'अजोहवीन्नासत्या करा वाम्' ( ऋ १,११६,१३ ) इति । किञ्च दशस्यन्ता दाशतेर्दानकर्मणः अन्तर्णीतसनर्थस्यैतद्रूपम् । दातुमिच्छन्तौ । किम् । सामर्थ्यात् पयः । अधेनुं सतीम् धेनुम् कृतवन्ता- शयवे शयुनाम्ने राज्ञे ऋषये वा पिप्यथुः आप्यायितवन्तौ । अधेनुं सतीं धेनुं कृतवन्तावित्यर्थः । किम् । उच्यते — गाम् । तदेतद् कक्षीवताऽप्युक्तम् — 'युवं धेनुं शयवे नाधिताय' ( ऋ १,११८,८ ), 'दस्रा स्तर्यं पिपथाम्' ( ऋ १,११७,२० ) इति च । इति च्यवाना! । इतिशब्दः पदपूरणः, सामर्थ्याद्वा हे-शब्दस्यार्थे हे च्यवाना! यज्ञात् शत्रून् वा प्रति गन्तारौ! । कीदृशीम् गाम् । उच्यते — सुमतिम् शोभना शयुं प्रति अनुग्रहरूपा मतिर्बुद्धिर्यस्याः सा सुमतिः ताम् । हे भुरण्यू! क्षिप्रौ! ॥ ७ ॥

वेङ्कट० जयशीलौ[14] गौतमस्य कूपमाहरन्तौ[15] शिलोच्चयं[16] मार्गस्य निरोधकं भित्त्वा मध्येन आगच्छतम् हे रथ्यौ![17] । तथा[18] अशृणुतम् च [19]हे अश्विनौ![19] ॥ ७ ॥

1-1. च… शब्द मूको. 2. नि… मूको. 3. °ष्मतीभिः मूको. 4. नास्ति वि[1]; अ…भिः° वि[1] अ. 5-5. कि…चिकी° मूको. 6-6. भुज्यन्ता भुजिसाम…र्थ° मूको. 7. कीदृशा वि[1] अ; कीदृशां वि[1] अ. 8-8. उदकान्त° मूको. 9. पर्व वि[1] अ 10-10. °स्थाम्भोभ्यः वि[1] अ[1], 11. °हथुः! मूको. वि[1]. 12-12. °देव…नागुर° वि[1] अ[1]. 13. °लैत अ[1] ल लभ. 14. °शमा° ल लभ. 15 शिरोच्चयं वि[1] लभ. 16-16. अश्वो ल लभ; अश्वो वि[1] अ[1], वि[1] ल लभ. 17. °थ्यौ ल; रथ्येन लभ. 18. अ° वि[1] अ[1].

ता । ह । त्यत् । वर्तिः । यत् । अरध्रम् । उग्रा । इत्था । धियः । ऊहथुः । शश्वत् । अश्वैः ।
मनःऽजवेभिः । इषिरैः । शयध्यै । परि । व्यथिः । दाशुषः । मर्त्यस्य ॥ ३ ॥

स्कन्द० द्वौ[१] यावुक्तगुणौ स्थः, तौ । ह इति पदपूरणः । त्यत् तत् प्रति [२]वर्तिः वर्तन्या अस्या- गमनमार्गेण[२] । यत्[३] कीदृशम् । उच्यते—यत् अरध्रम् रध हिंसासराद्ध्योः । साद्गुण्याद् रक्षोभिरहिंसितं हे उग्रा! शत्रूणामुपरि क्रुद्धौ![४] अप्रसह्यौ! वा इत्था सत्यनामैतत्[५] । सत्यम् अरि- संवादिना धियः । 'धीः' (निघ २,१) इति कर्मनाम । व्यत्ययेन [६]'चात्र षष्ठी । कर्मणा ऊहथुः[६] वहिरत्र सामर्थ्यात् प्राप्त्यर्थः[७] । स्थानप्रापणार्थम् प्राप्नुथः । गच्छथ इत्यर्थः शश्वत् नित्यम्[८] । केन । अश्वैः । कीदृशैः । मनोजवेभिः मनस इव जवो येषां ते मनोजवा अत्यन्तशीघ्रगतयः, तैः[९] इषिरैः प्रार्थनीयैः अत्यन्तोत्कृष्टैः । किमर्थम् । शयध्यै । शीङत्र स्थानार्थः, आमाशयो[१०] जलाशय इति यथा । तादर्थ्येऽर्थे तुमर्थे[११] च [१२]तावद् व्यवस्थानार्थम्[१२] । किञ्च परि [१३]व्यथिः । परीत्युप- सर्गश्रवणाद् योग्यक्रियापदाध्याहारः[१३] । परिवर्ज्यते युवाभ्यां क्रोधः दाशुषः । दाश्वानिति यजमाननाम । यजमानस्योपरि मर्त्यस्य मनुष्यस्य । मनुष्यस्यापि सतो यजमानाय न[१४] [१५]कुध्यथ इत्यर्थः[१५] ॥ ३ ॥

वेङ्कट० तौ खलु यदेदं वर्तिः मार्गं रक्षोभिरहिंसितम् आगच्छथ उग्रौ[१६], तदानीं सत्यमेव कर्माणि ऊहथुः[१७] वहथः स्तोतॄणां नित्यम् अश्वैः । तथा मनोजवैः गमनशीलैरश्वैः यजमानस्य शत्रुः युवाभ्यां परिशयनाय क्रियते, हन्यत इत्यर्थः ॥ ३ ॥

ता नव्य॑सो॒ जर॑माणस्य॒ मन्मोप॑ भूषतो युयुजा॒नस॑प्ती ।
शु॒भं पृक्ष॒मिष॒मूर्जं॒ वह॑न्ता॒ होता॑ यक्षत् प्र॒त्नो अ॒ध्रुग् युवा॑ना ॥ ४ ॥

ता । नव्य॑सः । जर॑माणस्य । मन्म॑ । उप॑ । भू॒षतः॒ । यु॒यु॒जा॒नस॑प्ती॒ इति॑ यु॒यु॒जा॒नऽस॑प्ती ।
शु॒भम् । पृ॒क्षम् । इष॑म् । ऊर्ज॑म् । वह॑न्ता । होता॑ । य॒क्ष॒त् । प्र॒त्नः । अ॒ध्रुक् । यु॒वा॑ना ॥ ४ ॥

स्कन्द० यावुक्तगुणौ तौ नव्यसः[१८] [१९]णु स्तुतौ । 'सर्वधातुभ्योऽसुन्' (पाउ ४,१८९) इत्यसुनि प्रत्यये वर्णोपजने चैतद्रूपम्[१९], नवशब्दस्य वा । अतिशयेन स्तोतुः नवस्य वा स्तोतुः जरमाणस्य स्तुवतः स्वसूक्तम् मन्म मननीयं यागकर्म प्रति उप भूषतः समीपे भवतः । उपगच्छत इत्यर्थः । युयुजानसप्ती योजनस्वभाविकाः सप्तयः अश्वा[२०] ययोस्तौ युयुजानसप्ती । कथं च पुनरागच्छतः । शुभम् पृक्षम् पृची सम्पर्के । सम्पर्कोऽदम्[२१] । सस्यसम्पत्करमित्यर्थः । इषम् अन्नं च ऊर्जम् रसं च वहन्ता प्रापयन्तौ । वहन्ताविवत्यर्थः । उपगतौ च सन्तौ [२२]होता यजत[२२] यजते प्रत्नः पुराणः अध्रुक् अद्रोग्धा यजमानस्य देवतानां वा युवाना सर्वदैव तरुणौ[२३] ॥ ४ ॥

१. द्व मूको. २-२. अनिन्दया वि°; वर्ति...तस्या° वि° भ. ३. य मूको. ४. क्रुद्धौ मूको. ५. सत्य...मै° मूको. ६-६. चात्र° ... मूको. ७. प्राप्तये मूको. ८. नि मूको. ९. तैः मूको. १०. आमयो मूको. ११. तुर्थे मूको. १२-१२. तावत्स्य वधानार्थे मूको. १३-१३. व्यथि...दाशुषः° १४. नास्ति मूको. १५-१५ क्रुध्येत्यर्थः मूको. १६. उग्रौ मूको. १७. ऊहु मूको. १८. नव्यस मूको. १९-१९. नव्यसो ... सुनि प्रत्य वर्ण द° मूको. २०. नास्ति वि°. २१. °दर्शी मूको. २२-२२. होतर्य° मूको. २३. तरुणौ वि°.

यद् रो॑दसी प्र॒दिवो॒ अस्ति॒ भूमा॒ हेळो॑ दे॒वाना॑मु॒त म॑र्त्य॒त्रा ।
तदा॑दित्या वसवो रुद्रियासो रक्षो॒युजे॒ तपु॑र॒घं द॑धात ॥ ८ ॥

यत् । रोद॒सी इति॑ । प्र॒ऽदिवः॑ । अस्ति॑ । भूमा॑ । हेळः॑ । दे॒वाना॑म् । उ॒त । म॒र्त्य॒ऽत्रा ।
तत् । आ॒दि॒त्याः॒ । व॒स॒वः॒ । रु॒द्रि॒या॒सः॒ । र॒क्षः॒ऽयुजे॑ । तपुः॑ । अ॒घम् । द॒धा॒त॒ ॥ ८ ॥

स्कन्द० यत् इति व्यत्ययेन नपुंसकता । यः हे रोदसी! द्यावापृथिव्यौ! प्रदिवः अस्ति विद्यते भूम । बहुशब्दपर्यायोऽयं द्रष्टव्यः । अत्यन्तबहुः हेळः 'हेळते'[1] ( निघ २,१२ ) इति क्रुध्यतिकर्मा, तस्येदं रूपम् हेळनं हेळः क्रोधः । कस्य । उच्यते—'देवानाम् उत मर्त्यत्रा 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' ( पा ५,४,५६ ) इति बाहुलकात् षष्ठ्या अर्थे त्रा-प्रत्ययः । उत मनुष्याणाम् तत् अत्रापि व्यत्ययेनैव नपुंसकता । तं सर्वं हे आदित्याः! हे वसवः! हे रुद्रियास । रुद्राः! रक्षोयुजे रक्षस्त्वेन युक्ताय । रक्षोरूपाय अस्मच्छत्रव इत्यर्थः । दधात दत्त । न च केवलं हेळम्[2] । किं तर्हि । तपुः तापयितृ च अघम् पापम् । योऽस्माकं [3]रक्षोरूपशत्रुः तस्मिन्[3] सर्वदेवान् सर्वमनुष्यांश्च क्रोधयत[4] तापकेन चापुण्येनैन[5] योजयतेत्यर्थः । एवमियमृक् स्वरूपेण रोदस्यादिदेवताका । तस्या अश्विनोः प्रसादेन यूयम् अस्माकम् एतत्कुरुतेत्येवमाश्विनीत्वं[6] व्याख्येयम् । ८ ॥

वेङ्कट० यत् रोदसी![7] पुराणमर्त्येषु पापपरेषु देवानाम् महत् हेडः विद्यते । क्रोधो हेडः । तत् हे आदित्याः! वसवः! रुद्रपुत्राश्च मरुतः! रक्षो भूत्वा युञ्जानाय तपनशीलम् अघम्[8] [9]कुरुत । 'अघम् आहननात्'[9] आयुधम् । द्यावापृथिव्यावश्विनौ मरुतः । स्तोत्रस्य सर्वांश्च देवान् याच इति ॥ ८ ॥

य ईं॒ राजा॑नावृतु॒था वि॒दध॒द् रज॑सो मि॒त्रो वरु॑ण॒श्चिके॑तत् ।
ग॒म्भी॒राय॒ रक्ष॑से हे॒तिम॑स्य॒ द्रोघा॑य चि॒द् वच॑स॒ आन॑वाय ॥ ९ ॥

यः॒ । ई॒म् । राजा॑नौ । ऋ॒तु॒ऽथा । वि॒ऽदध॑त् । रज॑सः । मि॒त्रः । वरु॑णः । चिके॑तत् ।
ग॒म्भी॒राय॑ । रक्ष॑से । हे॒तिम् । अ॒स्य॒ । द्रोघा॑य । चि॒त् । वच॑से । आन॑वाय ॥ ९ ॥

स्कन्द० यः मनुष्यः[10] । ईम् इति पादपूरणः । राजानौ ईश्वरौ दीप्तौ वा अश्विनौ ऋतुथा कालेकाले विदधत् । 'विधेम' ( निघ ३,५ ) इत्यस्य परिचरणकर्मण एतद्रूपम् । परिचरति । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तस्य रजसः उदकस्य मित्रः वरुणः च चिकेतत् जानाति । तस्मै अश्विनोः[11] प्रसादेन मित्रो वरुणश्च वृष्टिं ददाति, भाष्यतां इत्यर्थः । न च वृष्टिमेव केवलां ददाति । किं तर्हि । गम्भीराय दुरवगाहाय अत्यन्तभीषणाय अस्य शत्रवे रक्षसे रक्षोरूपाय हेतिम् वज्रम् अस्य रोदन कर्थं, व्यत्ययेन च मध्यमः । [12]'अस्यति क्षिपति'[12] । न च रक्षस एव केवलाय । किं

1. हेळत मूको 2 नास्ति मूको. 3-3. अस्मत्पापमयोऽस्माकं मूको. 4-4, 'शत्रु··· मूको.
5. क्रोधय मूको. 6. चापुण्येनैवं वि°. 7 'रोदसी' मूको. 8. अघम् मूको. 9-9. ···कुरुत°
वि°; ···इन° को°; अघ (घ) माहननाद° इ हल. 10. मनुष्य मूको. 11. अश्विनौ मूको 12-12. अस्य
क्षिपति वि°.

स्कन्द० [1]आ परमाभि[2] इति आ इत्यस्य यातमित्याख्यातेन सम्बन्धः । आ यातम् हे अश्विनौ[1] परमाभिः उत्कृष्टाभिः उत [2]मध्यमाभिः अनुत्कृष्टाभिः अवमाभिः निकृष्टाभिः[2] । याः काश्चन युवयोर्वडवाः शोभनाः अशोभनाश्च ताभिः सर्वाभिरित्यर्थः । अर्वाक् अस्मदभिमुखम् । किञ्च दृळ्हस्य चित् दृढस्यापि[3] दुरुद्घाटस्य गोमतः उदकवतः व्रजस्य मेघस्य दुरः द्वाराणि । अथवा गोमान्[4] व्रजो गोष्ठः तस्य द्वाराणि वि वर्तम् वर्तेते इत्यस्य गतिकर्मणोऽन्तर्णीतण्यर्थस्येदं[5] रूपम् । विवर्तयतम् उद्घाटयतमित्यर्थः । गृणते स्तुवते ममार्थाय । मह्यं वृष्टिं वा दातुं मेघस्य, [6]गा वा[6] दातुं स्वगोष्ठस्य द्वाराण्युद्घाटयतमित्यर्थः । हे चित्रराती ! विचित्रदानौ[7] ॥ ११ ॥

वेङ्कट० आ यातम् अभिमुखम् त्रिप्रमाणैः अश्वैः । दृढस्य अपि पशुमतः व्रजस्य द्वाराणि विवृतानि कुरुतम् स्तुवते हे चित्रदानौ[7] इति ॥ ११ ॥

[7]इति पञ्चमाष्टके अष्टमाध्याये द्वितीयो वर्गः[7] ॥

[ ६३ ]

[8]भरद्वाजो बार्हस्पत्य ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः, एकादशी एकपदा त्रिष्टुप्[8] ।

क्व१ त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नमस्वान् ।
आ यो अर्वाङ्नासत्या ववर्त प्रेष्ठा ह्यसथो अस्य मन्मन् ॥ १ ॥

क्व । त्या । वल्गू इति । पुरुऽहूता । अद्य । दूतः । न । स्तोमः । अविदत् । नमस्वान् ।
आ । यः । अर्वाक् । नासत्या । ववर्त । प्रेष्ठा । हि । असथः । अस्य । मन्मन् ॥ १ ॥

स्कन्द० क्व स्थाने त्या तौ वल्गू स्तुत्यौ प्रियौ वा पुरुहूता बहुभिराहूतौ अद्य दूतः न दूत इवास्मदीयः स्तोमः अविदत् विद ज्ञाने । ज्ञानीयात् नमस्वान् हविर्लक्षणेनान्नेन[8] संयुक्तः[9] । यथा राज्ञाऽन्येन वा [10]प्रेषितः दूतः[10] क्वाश्विनौ पश्येदित्यर्थः । यः स्तोमः किं कृतवान् । उच्यते—यः अर्वाक् अस्मदभिमुखम् नासत्या नासत्यनामानौ[11] न वा असत्यौ[12] सत्यौ एव अश्विनौ आ ववर्त पूर्वेष्वपि कालेष्वावर्तितवान् । [13]एष पादः प्रत्यक्षकृतः[13] । प्रेष्ठा हि असथः अतिशयेन प्रियौ युवाम् भवथः हि यस्मात् अस्य अस्मदीयस्य स्तोत्रस्य मन्मन् । मन्यतिरर्चतिकर्मा[14] (नि ३, १४)। छान्दसत्वाद् अधिकरणेऽयं मनिन् प्रत्ययः[15] । मन्यन्ते स्तूयन्ते यत्र देवाः[16] स मन्मा यज्ञः तस्मिन्[17] ॥ १ ॥

वेङ्कट० क्व [18]तौ वल्गनशीलौ[18] बहुभिराहूतौ अद्य[19] राज्ञप्रहितः[20] दूतः इव मदीयः स्तोमः हविषा संयुक्तो विन्दत् । यः स्तोमोऽभिमुखं नासत्यौ आ वर्तयति । तृतीयः पादः प्रत्यक्षः । प्रियतमौ हि भवथः[21] अस्य स्तोतुः स्तुतौ ॥ १ ॥

---

१-१. नास्ति मूको. २-२. भि अनुत्कृष्टाभि अवमाभि नि° मूको. ३. °स्यापि मूको. ४. नास्ति वि°. ५. °णो त° मूको. ६-६. गावो मूको. ७-७. नास्ति मूको. ८. °नान्नेन वि°. ९. संयुक्ता मूको. १०-१०. °तद् दूता मूको. ११. नासत्या° वि° नासत्यौ° वि° अ°. १२. न त्यौ मूको. १३-१३. एष पादः प्रत्यक्षः मूको. १४. मन्यतोऽर्थेतिकर्मा मूको. १५. मनिप्र° मूको. १६. देवता वि°. १७. नास्ति मूको. १८-१८. भा अ तु क तृ अ°. १९. अद्य मूको. २०. °प्रहिता मूको. २१. भवते मूको.

ऊर्ध्वो वा॑म॒ग्निर॑ध्व॒रेष्व॑स्था॒त् प्र रा॒तिरे॑ति जू॒र्णिनी॑ घृ॒ताची॑ ।
प्र होता॑ गू॒र्तम॑ना उरा॒णोऽयु॑क्त॒ यो नास॑त्या॒ हवी॑मन् ॥ ४ ॥

ऊ॒र्ध्वः । वा॒म् । अ॒ग्निः । अ॒ध्व॒रेषु॑ । अ॒स्था॒त् । प्र । रा॒तिः । ए॒ति॒ । जू॒र्णिनी॑ । घृ॒ताची॑ ।
प्र । होता॑ । गू॒र्तऽम॑नाः । उ॒रा॒णः । अयु॑क्त । यः । नास॑त्या । हवी॑मन् ॥ ४ ॥

स्कन्द० ऊर्ध्वः[1] वाम्[1] युवयोरर्थाय अग्निः अध्वरेषु यज्ञेषु अस्थात् स्थितः । प्रज्वलित इत्यर्थः । प्र एति प्रगच्छति आहवनीयं प्रति रातिः दानम् । कस्य । सामर्थ्याद् हविषः । जूर्णिनी "जूर्णिः" ( निघ २,१५ ) इति[2] क्षिप्रनाम । जूर्णिरेव जूर्णिनी, स्वार्थिकः । क्षिप्रा[3] घृताची उपस्तरणाभिघारणघृतेनाभ्यक्ता । न केवला रातिः[3] । किं तर्हि । प्र होता होताऽपि प्रैति होतृसदनं[4] प्रति गूर्तमनाः गुरी उद्यमने । स्तुतिक्रियायाम् उद्यतचित्तः उराणः उरुशब्दात् तत्करोतीति ण्यन्ताद् शानचि[5] एतद्रूपम् । बह्वीः स्तुतीः कुर्वन् । यः किं कृतवान् । उच्यते— अयुक्त यः । युजिरत्रान्तर्णीतण्यर्थः, उत्पूर्वो[6] च द्रष्टव्यः । यः स्वयज्ञं प्रति[7] आगमनाय उद्योजितवान् । कम् । उच्यते— नासत्या नासत्यौ युवाम् । केन । उच्यते— हवीमन् भावेऽयं मनिन् प्रत्ययः[8], इट् च छान्दसत्वात् । आह्वानेन ॥ ४ ॥

वेङ्कट० ऊर्ध्वः युवयोः होमाय यज्ञेषु अग्निः अस्थात् उदतिष्ठत् । प्र गच्छति च हविषो दर्वी क्षिप्रा जुहूः । प्र तिष्ठते च होता उद्गूर्णमनाः उरु स्तोत्रं कुर्वाणः । यः अश्विनौ युक्तौ अकरोद् हवने ॥ ४ ॥

अधि॑ श्रि॒ये दु॑हि॒ता सूर्य॑स्य॒ रथं॑ तस्थौ पुरुभुजा श॒तोति॑म् ।
प्र मा॒याभि॑र्मायिना भूतम॒त्र नरा॑ नृतू॒ जनि॑मन् य॒ज्ञिया॑नाम् ॥ ५ ॥

अधि॑ । श्रि॒ये । दु॒हि॒ता । सूर्य॑स्य । रथ॑म् । त॒स्थौ॒ । पु॒रु॒ऽभु॒जा॒ । श॒तऽऊ॑तिम् ।
प्र । मा॒याभिः॑ । मा॒यि॒ना॒ । भू॒त॒म् । अत्र॑ । न॒रा॒ । नृ॒तू॒ इति॑ । जनि॑मन् । य॒ज्ञिया॑नाम् ॥ ५ ॥

स्कन्द० अत्रेतिहासमाचक्षते— सूर्यस्य दुहितरं देवा वरयामासुः । त ऊचुः 'आजिं धावामः । यो नो जेष्यति[9] "तस्यैव भविष्यतीति । ताम् अश्विनौ जिग्यतुः[9] । सा जितास्विनोः रथम् आरुरोहेति । तदेतदिहोच्यते— 'अधि श्रिये दुहिता' इति । श्रिये श्रयितुम् दुहिता सूर्यस्य सूर्यपुत्री सूर्या रथम् अधि तस्थौ अध्यतिष्ठत्[10] । आरूढवत्यर्थः । हे पुरुभुजा ! बहूनां हविषाम् अभ्यवहर्तारौ ![11] पालयितारौ ! वा स्तोतॄणाम् । कीदृशं रथम् । उच्यते— शतोतिम् बहुगतिम् आजिरथेभ्योऽन्येभ्यो रथेभ्यः शीघ्रतरमित्यर्थः । किञ्च मायाभिः अतिशयवतीभिः प्रज्ञाभिः हे मायिना ! प्रज्ञावन्तौ ! प्र भूतम्[12] । "लडर्थेऽयं लुङ् । प्रभवथः । ईशाथे इत्यर्थः । हे नरा ![13] मनुष्याकारौ ! [14]नृतू ! नर्तनशीलौ ![14] अत्र जनिमन् । जायन्ते यत्र स्तुतयो [15]हवींषि वा स जनिमा[15] यज्ञ इत्यभिप्रेतः । अस्मिन् यज्ञे यज्ञियानाम् यज्ञार्हाणाम् । अस्माकम् यज्ञकारिणामित्यर्थः ॥ ५ ॥

---

१-१. ऊर्ध्व॰ मूको. २. नास्ति वि॰. ३. रातिः मूको. ४. होतृषु दनं मूको. ५. ॰नि शानच ॰रूपः मूको. ६. उत्॰ मूको. ७. व … मूको. ८. ॰निप्र॰ मूको. ९-९. आजिन्धावामयानो जे मूको. १०-१०. नास्ति मूको. ११. ॰भ्यवहर्तारौ मूको. १२. भूतम् मूको. १३-१३. लडर्थे य … लुङ … थेति … ॥ मूको. १४-१४. नृ (नृ वि॰.) …नशीलौ मूको. १५-१५. हवींषि जनिमा मूको.

सं वां शता नासत्या सहस्राश्वानां पुरुपन्था गिरे दात् ।
भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥ १० ॥

सम् । वाम् । शता । नासत्या । सहस्रा । अश्वानाम् । पुरुऽपन्थाः । गिरे । दात् ।
भरत्ऽवाजाय । वीर । नु । गिरे । दात् । हता । रक्षांसि । पुरुऽदंससा । स्युरिति स्युः ॥ १० ॥

स्कन्द० वाम् इति षष्ठीनिर्देशात् प्रसादेनेति वाक्यशेषः । युवयोः प्रसादेन हे नासत्यौ! शतानि च 'सहस्राणि च अश्वानाम्' पुरुपन्थाः नाम राजा गिरे गृणातीति गीः 'स्तोता, तस्मै' सम् दात् सम्यग् दत्तवान् । कस्मै । उच्यते — भरद्वाजाय मह्यम् । हे वीर! व्यत्ययेनेदमेकवचनम् । वीरौ! शूरौ! । न च विलम्बितवान्', किं तर्हि । नु क्षिप्रमेव मह्यम् गिरे अदात् । किञ्च युष्मत्प्रसादेन हता हतानि अस्मच्छत्रुभूतानि रक्षांसि हे पुरुदंससा! बहुकर्माणौ! स्युः भवेयुः ॥ १० ॥

वेङ्कट० सम् प्रायच्छत् युवयोः स्तोत्रे अश्वानाम् शतानि सहस्राणि च नासत्यौ! पुरुपन्थाः नाम राजा भरद्वाजाय क्षिप्रं हे वीरौ! । द्विवचनं लुप्तम् । हतानि रक्षांसि भवन्तु हे बहुकर्माणौ! ॥ १० ॥

आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम् ॥ ११ ॥

आ । वाम् । सुम्ने । वरिमन् । सूरिऽभिः । स्याम् ॥ ११ ॥

स्कन्द० 'वाम् युवयोः' प्रसादेन सुम्ने सुखे वरिमन् । कर्मण्ययं 'मनिन् प्रत्ययः' । वरणीये प्रार्थनीये उत्कृष्टे सूरिभिः स्तोतृभिः पुत्रपौत्रैः ऋत्विग्भिर्वा सह 'आ स्याम्' आभिमुख्येन भवेयम् । सपुत्रपौत्रादिपरिवारः' उत्कृष्टं सुखं प्राप्नुयामित्यर्थः ॥ ११ ॥

वेङ्कट० एकपदा । युवयोः सुखे विस्तृते स्तोतृभिः पुत्रादिभिः सह आभिमुख्येन स्याम् ॥ ११ ॥

'इति पञ्चमाष्टके प्रथमाध्याये चतुर्थो वर्गः' ॥

[ ६४ ]

'भरद्वाजो बार्हस्पत्य ऋषिः । उषा देवता । त्रिष्टुप् छन्दः' ।

उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशन्तः ।
कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥ १ ॥

उत् । ऊँ इति । श्रिये । उषसः । रोचमानाः । अस्थुः । अपाम् । न । ऊर्मयः । रुशन्तः ।
कृणोति । विश्वा । सुऽपथा । सुऽगानि । अभूत् । ऊँ इति । वस्वी । दक्षिणा । मघोनी ॥१॥

---

१-१. सह...दत्तां मूको. २-२. स्तोतारो... मूको. ३. वि...तवान् मूको. ४. वां इत्येतं युवयोः वि' अ. ५-५. मनिप्' मूको. [illegible]

स्कन्द० "'उदु श्रिये' उषसो[1] द्वे"। उषोदेवत्ये द्वे एते सूक्ते। उदित्युपसर्गः अस्थुरित्याख्यातेन सम्बन्धयितव्यः। उ इति पदपूरणः। श्रिये प्रकाशलक्षणायै। कृत्स्नस्य जगतः प्रकाशनार्थमित्यर्थः। रोचमानाः उत् अस्थुः उषसः एकस्यामेव[2] पूजार्थं बहुवचनम्, अवयवभेदापेक्षं वा। रोचमानाः उत् अस्थुः उषसः। यथा नद्यां सरसि वा उत्थिताः। कथं च पुनरुद्गताः। अपाम् न उदकस्येव ऊर्मयः इवन्तः[3]। यथा नद्यां सरसि वा 'कूलं निघ्नन्तः' उद्गच्छेयुः तद्वत् स्वभासा[4] कृत्स्नं जगदाप्लाव्य महीम्[5] उदकोर्मय आप्लाव्य 'इयम् एकवद्भावेनैव उषसः स्तुतिः'[6]। करोति तमांसि प्रत्य उद्गता[7] इत्यर्थः। उद्गत्य च कृणोति 'इयम् एकवद्भावेनैव उषसः स्तुतिः'। सुगानि सुगमनानि। उषाः विश्वा सर्वाणि सुपथा शोभनाः पन्थानः सुपथानि छान्दसत्वात् नपुंसकता। सुगानि सुगमनानि। [10]अभूत् भवति[10] च। उ[11] 'ये केचन' शोभनाः तान् सर्वान् प्रकाशयन्त्यो सुगमनान् करोतीत्यर्थः। दक्षतेरुत्साहकर्मण इति पदपूरणः। वस्वी। वसुशब्दः प्रशस्तपर्यायः। प्रशस्ता दक्षिणा। दक्षतेरुत्साहकर्मण एतद्रूपम्। उत्साहकरी मनुष्याणाम्। उद्गतायां ह्युषसि मनुष्याः स्वकर्मसूत्साहं कुर्वन्ति, अतः [12]'सैषाम् उत्साहकरी'[12] भवतीत्युच्यते। मघोनी धनवती। उषा हि देवतात्वात् [13]स्वेनैव वा धनेन[13], हविर्लक्षणेन वा, यजमानेन वा तदधिपतित्वाद् धनवती ॥ १ ॥

वेङ्कट० उत् तिष्ठन्ति अर्थम् उषसः दीप्यमानाः अपाम् [14]इव ऊर्मयः[14] श्वेतवर्णाः। अर्थैकत्वमाह — करोति विश्वानि भुवनानि शोभनमार्गाणि शोभनगमनानि च। प्रादुर्भूतायाम् उषसि भवत्युदाराणां प्रशस्ता धनवती दक्षिणा ॥ १ ॥

भद्रा द॑दृक्ष उर्वि॒या वि भा॑स्यु॒त् ते॑ शो॒चिर्भा॒नवो॒ द्याम॑पप्तन् ।
आ॒विर्वक्षः॑ कृणुषे शु॒म्भमा॒नोषो॑ देवि॒ रोच॑माना म॒होभिः॑ ॥ २ ॥

भ॒द्रा । द॒दृ॒क्षे॒ । उ॒र्वि॒या । वि । भा॒सि॒ । उत् । ते॒ । शो॒चिः । भा॒नवः॑ । द्याम् । अ॒प॒प्त॒न् ।
आ॒विः । वक्षः॑ । कृ॒णु॒षे॒ । शु॒म्भमा॑ना । उषः॑ । दे॒वि॒ । रोच॑माना । म॒हःऽभिः॑ ॥ २ ॥

स्कन्द० भद्रा[15] कल्याणी ददृक्षे दृश्यसे त्वम् उर्विया। प्रथमैकवचनस्य इयमियाजादेशः। [16]उर्वी च[16] विस्तीर्णा[17] वि भासि दीप्यसे। ते तव शोचिः दीप्तिः भानवः रश्मयश्च द्याम् द्युलोकम् उत् अपप्तन् उत्पतन्ति। गच्छन्तीत्यर्थः। किञ्च आविः प्रकाशम् वक्षः आत्मीयम् उरः[18] कृणुषे करोषि त्वम् शुम्भमाना शोभमाना हे उषः! देवि! रोचमाना दीप्यमाना महोभिः [19]महद्भिः तेजोभिः[19]। सामर्थ्यात् तेजोभिः ॥ २ ॥

वेङ्कट० भद्रा दृश्यसे[20] त्वम् अमिता[21] च वि भासि। तस्याः ते शोचिः भानवा च [22]"उत् अपतन्[22]" द्याम् प्रति। त्वम् आविः कृणोषि वक्षः शोभमाना हे उषः! देवि! दीप्यमाना तेजोभिः ॥ २ ॥

१. उपस्ये मूको. २. कस्य मेव मूको. ३. इव तः मूको. ४. मह्य मूको. ५-५. दृश्यन्निमा (॰नि॰॰॰ वि॰.) –नः मूको. ६. नास्ति वि॰. ७. उद्र मूको. ८-८. ॰भेकभावे॰ मूको. ९-९. ये॰॰॰ मूको. १०-१०. अभू॰॰॰ मूको. ११. नास्ति मूको. १२-१२. सैषा॰ मूको. १३-१३. "सैदानवे" मूको. १४-१४. इमे पति मूको. १५. भद्रा इव वि॰. १६-१६. ॰॰॰च मूको. १७-१७. विस्तीर्णाम् ॰॰॰मम वि॰ अ॰, एष कर्मान्तः क एव. १८. उर मूको. १९-१९. मह॰॰॰र्भः वि॰, महद्भिः वि॰ अ. २०. ॰॰॰से वि॰ वि॰ अ; विस्तीर्णा वि॰. २१. अमी मूको. २२-२२. उदयत् वि॰; उदपत अ॰; उदपतन् ल एव. अ॰; उदपतन् ल एव.

स्कन्द० उतो वयः । इयं प्रथमेवं ( ऋ १,१२४,१२ ) व्याख्यातार्था ॥ १ ॥

वेङ्कट० गतेति ( द्र. ऋ १,१२४,१२ ) ॥ ६ ॥

[1]इति पञ्चमाष्टके प्रथमाध्याये पञ्चमो वर्गः[1] ॥

[ ६५ ]

[2]भरद्वाजो बार्हस्पत्य ऋषिः । उषा देवता । त्रिष्टुप् छन्दः[2] ।

एषा स्या नो दुहिता दिवोजाः क्षितीरुच्छन्ती मानुषीरजीगः ।
या भानुना रुशता राम्यास्वज्ञायि तिरस्तमसश्चिदक्तून् ॥ १ ॥

एषा । स्या । नः । दुहिता । दिवःऽजाः । क्षितीः । उच्छन्ती । मानुषीः । अजीगरिति ।
या । भानुना । रुशता । राम्यासु । अज्ञायि । तिरः । तमसः । चित् । अक्तून् ॥ १ ॥

स्कन्द० एषा स्या सा नः अस्मान् प्रति दुहिता कस्य । दिवोजाः दिवः सकाशाज्जाता । दिवो दुहितेत्यर्थः । न च [3]केवलान् अस्मान्[3] । किं तर्हि । क्षितीः मनुष्यजातीश्च मानुषीः मनुष्येषु भवाः । याश्च याः काश्चन मनुष्येषु भवाः ब्राह्मणादिमनुष्यजातयः । अजीगः [4]गिरतिर्गिरतिकर्मा[4] वा, गृणातिकर्मा[5] वा[5] अत्र । इह तु सामर्थ्याद् गत्यर्थः । अस्मान् अन्यांश्च सर्वानेव मनुष्यान् प्रति गच्छतीत्यर्थः । या भानुना रश्मिलक्षणेन तेजसा रुशता हिंसता राम्यासु 'राम्या' ( निघ १,७ ) इति रात्रिनाम । रात्रिषु अज्ञायि ज्ञायते । किं रुशता । उच्यते—तिरः । "तिरः सतः[6] इति प्राप्तस्य"[7] ( या ३,२० ) । नाम्नी । अप्राप्तस्यापि अनुपजातस्यापि । कस्य । तमसः । चित्-शब्दस्तु पदपूरणः । अक्तून् तमसा वा [8]अभिव्यक्तपदा अपि रुशतेत्यर्थः[8] । अथवा 'अक्तुः' ( निघ १,७ ) इति रात्रिनाम । अक्तूनिति [9]तमस इति[9] च[10] विपर्ययेण षष्ठ्येकवचनद्वितीयाबहुवचने द्रष्टव्ये । अप्राप्तान्यपि तमांसि रात्रेः[11] सम्बन्धीनि रुशतेत्यर्थः ॥ १ ॥

वेङ्कट० सा एषा नः दिवो जाता दुहिता मानुषीः प्रजाः वि उच्छन्ती उदजागार । उषसि हि मानुष्यः प्रजाः निर्गच्छन्ति । या भानुना व्यक्तता रात्रिषु ज्ञायते तमः तिरः कुर्वती[12] रक्षांसि घ्नती ॥ १ ॥

वि तद्ययुररुणयुग्भिरश्वैश्चित्रं भान्त्युषसश्चन्द्ररथाः ।
अग्रं यज्ञस्य बृहतो नयन्तीर्वि ता बाधन्ते तम ऊर्म्यायाः ॥ २ ॥

वि । तत् । ययुः । अरुणयुक्ऽभिः । अश्वैः । चित्रम् । भान्ति । उषसः । चन्द्रऽरथाः ।
अग्रम् । यज्ञस्य । बृहतः । नयन्तीः । वि । ताः । बाधन्ते । तमः । ऊर्म्यायाः ॥ २ ॥

स्कन्द० [13]तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः[13] । यद् अश्वान्स्तुतीमपर्वतशिखरादि तत्

1. नवमे मूको. 2-2. नास्ति मूको. 3-3. केवला वि°. 4. °गिरति कर्म मूको. 5. गृणाति कर्म मूको. 6-6. तिरस मूको. 7. प्राप्तस्य मूको. 8-8. 'व्यक्त ता अपि…' मूको. 9-9. नास्ति मूको. 10. नास्ति वि°. 11. रात्रेः मूको. 12. °ञ्जति वि° अ°; तीर कुर्व°लका; °न्ती ल. 13-13. °न्यो …°ः मूको.

वपुः । नु । तत् । चिकितुषे । चित् । अस्तु । समानम् । नाम । धेनु । पत्यमानम् ।
मर्तेषु । अन्यत् । दोहसे । पीपाय । सकृत् । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥ १ ॥

स्कन्द० “ ‘वपुर्नु तद्’ मारुत सूक्तमुत्तरम्” । मरुद्देवत्यमेतत् पूर्वाभ्यामुपरताभ्यामुत्तरम् । वपु ‘वपु’ (निघ १, १२) इत्युदकनाम । वृष्टिलक्षणमुदकम् नु क्षिप्रम् तत् चिकितुषे ज्ञातुरर्थाय अस्तु भवतु । पततीत्यर्थः । यत् कीदृशम् । उच्यते — समानम् तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यत् सर्वप्राणिसाधारणम् नाम । ‘नाम’ (निघ १, १२) इति उदकनाम, ‘सामर्थ्याच्चान्तर्णीतण्यर्थोऽत्र नमि । नमयत्यन्नमाहारार्थम् । उदकमेव[1] पार्थिवेन रजसा संसृष्टमित्यर्थः । धेनु धिन्वते[2] प्रीणनार्थस्येदं[3] रूपम् । प्रीणयितृ पत्यमानम् पतत् । कस्य[4] प्रीणयितृ । उच्यते — मर्तेषु । षष्ठ्यर्थे सप्तम्येषा । मनुष्याणाम् । अन्यत् पृथग्भूतम् । सामर्थ्यात् पार्थिवादुदकात् । यच्च दोहसे दोहनार्थम् पीपाय अद्भिर्मासैर्भौमान् रसान् आदायाऽऽदाय आप्याययति । आप्याय्य च सकृत् संवत्सरस्य सकृदेव । वर्षास्वेव, नान्यस्मिन् काल इत्यर्थः । शुक्रम् शुक्लवर्णम् दुदुहे दोग्धि क्षारयति पृश्नि द्यौ (तु या २, १४) मरुतां माता ऊधः ऊधःस्थानीय मेघम् ॥ १ ।

वेङ्कट० रूप क्षिप्र तज्ज्ञातुः[5] प्रादुर्भवतु समानाकारम्, सदृशा हि मरुत, पदार्थाना नामक प्रीणयितृ सदा गच्छत् । किं तदित्याह — मर्त्येषु अन्यत् एकदेश तस्य रूपस्य मर्त्यानामभिवर्षि तद्दोहार्थम् वृष्टि पीपाय[6] । दिवि चान्यदेवेषु[7] सकृत् पृश्नि आत्मीयम् ऊध शुक्रम् दीप्तरूपम् दुदुहे इति ॥ १ ॥

ये अग्नयो न शोशुचन्निधाना द्विर्यत् त्रिर्मरुतो वावृधन्त ।
अरेणवो हिरण्ययास एषां साकं नृम्णैः पौंस्येभिश्च भूवन् ॥ २ ॥

ये । अग्नयः । न । शोशुचन् । इधानाः । द्विः । यत् । त्रिः । मरुतः । ववृधन्त ।
अरेणवः । हिरण्ययासः । एषाम् । साकम् । नृम्णैः । पौंस्येभिः । भुवन् ॥ २ ॥

स्कन्द० ये मरुत अग्नय[8] न अग्नय इव शोशुचन् दीप्यन्ते इधाना दीप्यमाना । न च सकृत् किं तर्हि । द्वि च त्रि च । पुन पुनरित्यर्थः । यत् ये च मरुत वावृधन्त शरीरेण वीर्येण च परिवृद्धा । यच्छब्दश्रुतेस्तच्छब्द एषामित्यनेन[9] समानाधिकरणोऽध्याहार्यः । तेषाम् एषाम् अरेणव धूलिवर्जिता । [10]अमलिना इत्यर्थः[10] हिरण्ययास हिरण्मया । के । सामर्थ्याद् रथा । किञ्च एते मरुत साकम् सह नृम्णै सेनालक्षणैर्बलै पौंस्येभि च सामर्थ्यलक्षणैश्च बलै भुवन् उत्पन्ना । उत्पत्तित एव प्रभृति ते [11]एते मरुत सेनाभि[11] सामर्थ्येन चोपेता इत्यर्थ ॥ २ ॥

वेङ्कट० य अग्नय इव काष्ठै समिध्यमाना दीप्यन्ते अलङ्कृता । ये च प्रादुर्भूता द्वि द्विगुणम्

1 1. °मेव पार्थ उदकमेव मूको 2 धिन्वते मूको 3 °णस्यैतद् वि° 4. कस्य मूको 5 तज्ज्ञातु मूको 6 पाय मूको 7 °देवेषु वि° 8. अग्नय मायो वि° 9 °मित्यधि करणेन वि° 10 10. अमि (मलि° वि°) ना इत्यत मूको 11 11 एव सेनाभि मूको

दि त्रिगुण च मरुत[1] प्रादुर्भवन्ति । रेणुवर्जिता हिरण्मया रथा "च एषाम्[2], ते साकम् धनं पर्जन्य[3] प्रादुर्भवन्ति ॥ २ ॥

रुद्रस्य ये मीळ्हुषः सन्ति पुत्रा याँश्चो नु दाधृविर्भरध्यै ।
विदे हि माता महो मही षा सेत् पृश्निः सुभ्वे॒ गर्भमाधात् ॥ ३ ॥

रुद्रस्य । ये । मीळ्हुषः । सन्ति । पुत्राः । यान् । चो इति । नु । दाधृविः । भरध्यै ।
विदे । हि । माता । महः । मही । सा । सा । इत् । पृश्निः । सुऽभ्वे । गर्भम् । आ । अधात् ॥३॥

स्कन्द० रुद्रस्य ये मरुत मीळ्हुष सेक्तु वर्षितुरित्यर्थ[4] । सन्ति भवन्ति पुत्रा । यान् च । उ नु इति पदपूरणौ । दाधृवि धृञ् धारणे । साधु धारयित्री भरध्यै[5] डुभृञ् धारणपोषणयो उदरेण धारयितुम्, विदे ज्ञातवती । हि पदपूरण । माता जनयित्री । कीदृशान् । उच्यते — मह महत । कीदृशी । उच्यते — मही सा । सच्छन्दश्रुतेर्यच्छन्दोऽध्याहार्यं । या महती सा । विदित्वा च सा इत । इच्छन्दोऽत्र पूरणार्थे । सैव पृश्नि सुभ्वे "[6]महदर्थं पुरुद् दृश्यम्[7] । महत्सुदरे गर्भम् गर्भभूतान् आ अधात् दधातिर्धारणार्थे । धारितवत्येत्यर्थ एतावती । अस्या ऋच उत्तरयोश्च पच्छदश्रुते "तथा "त इदुमा"[8] इत्यत्र च तच्छन्दश्रुते अनयर्चैकवाक्यता ॥ ३ ॥

वेङ्कट० रुद्रस्य सेक्तु[8] ये भवन्ति पुत्रा । यान् च एष धारयन्नागा हि भरणाय भवति[9] न म्रियते तेषाम् माता महत्याऽऽसीत् महतोऽपि मही सा पृश्नि । सा[10] एव[11] शोभनभवनाय[12] मरुद्गणाय गर्भम् आहितवती ॥ ३ ॥

न य ईषन्ते जनुषोऽया न्व१न्तः सन्तोऽवद्यानि पुनानाः ।
निर्यद् दुह्रे शुचयोऽनु जोषमनु श्रिया तन्वमुक्षमाणाः ॥ ४ ॥

न । ये । ईषन्ते । जनुषः । अया । नु । अन्तरिति । सन्तः । अवद्यानि । पुनानाः ।
निः । यत् । दुह्रे । शुचयः । अनु । जोषम् । अनु । श्रिया । तन्वम् । उक्षमाणाः ॥ ४ ॥

स्कन्द० न ये मरुत ईषन्ते पाल्यन्ते जनुष पञ्चमी श्रुते प्रभृतीति वाक्यशेष जन्मन एव प्रभृति अया "[13]पूर्वेरप् छान्दसत्वात्[13] "[14]प्रत्यय प्रातिपदिकस्यानुदात्तत्वात्[14] । षष्ठीबहुवचनस्य डादेश । मरुद्गणा मेघानाम् । नु[15] इति पदपूरण अन्त मध्ये सन्त अवद्यानि यानि तत्र गर्भाण्युदकानि तानि पुनाना शोधयन्त । ये च नि दुह्रे निर्दुहन्ति मेघान् शुचय शुद्धा दीप्ता अनु जोषम् 'जुषते' ( निघ २, ६ ) इति कान्तिकर्मा । अनुकामम् । इच्छानन्तरमनेनेत्यर्थ[16] । अनु

1. °त प्रादकतो मूको. 2 २ भासित मूको 3. इषेरन मूको. 4. वर्षितु° मूको. 5 भरध्ये मूको 6 ६ मह उदुर° मूको 7 ७ त वदुया° मूको 8. °क मूको 9. °न्ति मूको 10. स मूको 11 एव मूको 12. °भनाय° मूको. 13 13. पर्वेरप् छान्द° त्रि° क, छतेऽरप् छान्द° वि° 14-14. प्रत्ययस्वरा° मूको, 15 नानु मूको, 16. इच्छाऽऽन° मूको

श्रिया। अनु इत्युपसर्गश्रुतेः श्रियेति च तृतीयाश्रुतेर्योग्यक्रियाशब्दाध्याहारः। अनुगताः श्रिया। शोभमाना इत्यर्थः। तन्वम्[1] शरीरम् आत्मीयम् उक्षमाणाः उदकेन सिञ्चन्तः[2] ॥ ४ ॥

वेङ्कट० न ये गच्छन्ति जातान्[3] मनुष्यान् शीघ्रं गन्तव्यानि स्थानानि शरीरस्य अन्तः सन्तः अवद्यानि पुनानाः। 'निः दुहन्ति' दीप्ताः यदा उदकम् इच्छायाम्, तदानीम् अनुगताः श्रिया भवन्ति विस्तृतमुदकं सिञ्चन्तः[4] ॥ ४ ॥

मक्षू न येषु दोहसे चिदया आ नाम धृष्णु मारुतं दधानाः।
न ये स्तौना अयासो मह्ना नू चित् सुदानुरव यासदुग्रान् ॥ ५ ॥

मक्षु। न। येषु। दोहसे। चित्। अयाः। आ। नाम। धृष्णु। मारुतम्। दधानाः।
न। ये। स्तौनाः। अयासः। मह्ना। नु। चित्। सुऽदानुः। अव। यासत्। उग्रान् ॥ ५ ॥

स्कन्द० 'मक्षु' क्षिप्रम्। न-शब्दोऽत्रोपरिष्टादुपचार उपमार्थीयत्वात् 'अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः' (या ७,३१) इति पदपूरणः[5]। 'येषु प्रथमार्थे' सप्तमीयम्[6]। ये[7] दोहसे दोहनाय मेघस्य। चित्-शब्दः पदपूरणः। अयाः मेघं प्रति गन्तारः नाम उदकम् (द्र० निघ १,१२) धृष्णु अभिभवितृ। प्रभूतमित्यर्थः। मारुतम् मरुतां यद्योग्यं तत् आ दधानाः आभिमुख्येन ददतः। ये च न स्तौनाः। स्तुनाः इति महन्नाम, तस्मात् स्वार्थे तद्धितः। न महान्तः न स्थविराः। तरुणा इत्यर्थः। अयासः शत्रून् प्रति गन्तारः मह्ना महत्वा सेनालक्षणेन बलेन। यांश्च नु चित्। नुचिच्छब्दोऽत्र नशब्दस्यार्थे। 'नू चित् सहोजाः' (ऋ १,५८,१) इति यथा। न सुदानुः शोभनोऽपि दाता यजमानः अव यासत्। अवेत्ययं मा इत्येतस्य स्थाने। मायासयति क्लेशयति। आगतमात्रेभ्य एव हविर्ददाति, नैनान् प्रतीक्षयतीत्यर्थः। उग्रान् अप्रसह्यान्[8] क्रूरान् वा ॥ ५ ॥

वेङ्कट० ये न देवेषु[11] धर्षणशीलम् मारुतम् नाम आ दधानाः उच्चारयन्तो मनुष्याः शीघ्रम् उदारेषु धनस्य दोहाय गन्तारो भवन्ति, न च[12] ते[13] चोराः महत्त्वेन यान् उद्गूर्णान् क्षिप्रमेव शोभनदानः यजमानः अवेन्ते क्रोधरहितान् करोति। [14]स्तैन्यतिरस्थापः स्तौभयतिः[14] ॥ ५ ॥

[15]इति पञ्चमाष्टके प्रथमाध्याये सप्तमो वर्गः[15] ॥

त इदुग्राः शवसा धृष्णुषेणा उभे युजन्त रोदसी सुमेके।
अध स्मैषु रोदसी स्वशोचिरामवत्सु तस्थौ न रोकः ॥ ६ ॥

---

१. मनन्व मूको. २. सिञ्च... मूको. ३. °ता मूको. ४-४. निर्दे° वि[1] अ. ५. °न्तम् वि[1] अ[1]. ६-६. ...शब्द क क्या( उपरा° वि[2] )पीक्ष्यादरस्युपमार्थीयत्वादस्त्युपमार्थी अत्य( पीक्ष्यादस्त्युपमार्थी अस्य वि[1] अ[1].) सेवन्यर्थे प्रयोग इति पदपूरणः मूको. ७-७. ...प्रथ° मूको. ८. °ीया मूको. ९. नास्ति वि[2]. १०. मसह्यान् मूको. ११. देवेषु वि[1] अ[1]. १२. ये मूको. १३. वेरे वि[2]. १४-१४. ती नयनि धर्षयन्तौ नयति वि[1] द; ते नयति धर्षेण, सौ नयनि अ[1]; ते नयनि धर्षयन्तौ स्पनि इमः। नी ताडयितयौवौ क प्रकाशः. १५-१५. नास्ति मूको.

ते । इत् । उग्राः । शवसा । धृष्णुऽसेनाः । उभे इति । युजन्त । रोदसी इति । सुमेके इति सुऽमेके ।
अध । स्म । एषु । रोदसी । स्वऽशोचिः । आ । अमवत्ऽसु । तस्थौ । न । रोकः ॥ ६ ॥

स्कन्द० ये ऋजतापेणोक्तविशेषणा ते । इत् इति पदपूरणः । उग्राः उद्गूर्णबलाः शूरा वा शवसा स्वेन बलेन धृष्णुसेना अभिभवितृसेनाः उभे अपि युञ्जन्त स्वपरिचर्यायां नियुञ्जते रोदसी द्यावापृथिव्यौ । सुमेके, मेको दर्शनम् । सुदर्शने[1] । अथवा मिह सेचने इत्यस्य मेक इति रूपम् । सुसेक्त्र्यौ[2] । अध स्म एषु । द्वितीयार्थे[3] [4]सप्तम्येषा । इमान् रोदसी[4] रुद्रस्य पत्नी पृश्निर्मरुतां माता स्वशोचिः स्वदीप्तिः स्वसामर्थ्येनैव दीप्तेत्यर्थः । अमवत्सु अमशब्द आत्मपर्यायः । इयमपि च द्वितीयार्थ एव सप्तमी । आत्मवतः । यत्नकारिण इत्यर्थः । अथवा[5] अम रोगे इत्यस्य धातो अमशब्दो रोगवचनः । रोगभूतान् शत्रूणाम् आ तस्थौ अधितिष्ठति । कार्याणि कुर्वतः[6] प्रत्यवेक्षत इत्यर्थः । रोदसी हि मरुतां माता । माता च पुत्रान् कार्याणि कुर्वतः[7] अवश्य[8] प्रत्यवेक्षते । रोकः । रोचत इति रोकः आदित्यः । नशब्दश्च पुरस्तादुपचारोऽपि सामर्थ्याद् उपमार्थीयः । यथादित्यः लोकपालत्वात् सर्वान् प्राणिनः प्रत्यवेक्षते तद्वदित्यर्थः ॥ ६ ॥

वेङ्कट० ते इत् उग्राः शवसा धर्षणशीलसेनाः संयोजयन्ति उभे द्यावापृथिव्यौ अत्यन्तम् एकचर्ये[9] । अथ खलु एषु मरुत्सु रुद्रस्य पत्नी मरुतां माता स्वभूतदीप्तिः तिष्ठति । न च बलवत्सु[10] मरुत्सु आ तिष्ठति दीप्तिः, भूयोभूयः स्फुरतीत्यर्थः[11] ॥ ६ ॥

अनेनो वो मरुतो यामो अस्त्वनश्वश्चिद्यमजत्यरथीः ।
अनवसो अनभीशू रजस्तूर्वि रोदसी पथ्या याति साधन् ॥ ७ ॥

अनेनः । वः । मरुतः । यामः । अस्तु । अनश्वः । चित् । यम् । अजति । अरथीः ।
अनवसः । अनभीशुः । रजःऽतूः । वि । रोदसी इति । पथ्याः । याति । साधन् ॥ ७ ॥

स्कन्द० अनेनः अपाप[12] वः युष्माकम् स्वभूतो[13] हे मरुतः ! यामः रथः अस्तु अस्माकम् उपरि भवत्विवत्येवदाशास्महे । सः कीदृशः । इत्यतो—अनश्वः चित् अश्वरहितोऽपि यम् प्रथमार्थे द्वितीयैषा । यः[14] अजति गच्छति अरथी सारथिरहितश्च अनवसः अन्नस्य पथ्योदनम्, तद्रहितश्च अनभीशुः अश्वरश्मिरहितश्च[15] रजस्तूः रजांसि त्रयो लोकाः, तान् प्रति त्वरिता । अथवा रज उदकम्, तस्य मेघस्थस्य तर्विता हिंसिता रोदसी द्यावापृथिव्यौ पथ्याः नियतेन पथा वि याति विविधं निर्याति साधनतुल्यस्थानानि शत्रुबलानि साधन् साधयन् ॥ ७ ॥

वेङ्कट० हे मरुतः ! पापरहितम् युष्माकम् गमनम् इह अस्तु । यम् यामम् अश्ववर्जितः अरथी च प्रेरयति

---

१. सुदर्शनम् मूको. २. सुसेक्त्र्यौ मूका. ३. तृतीया° वि°. ४-४. °म्येषा रो° मूको. ५-५. °र्थः । अथवा अम° मूको. ६. कुर्वते मूको. ७. भवन्ते मूको. ८. तु मात्रा ?,?,?,?, °थ्यौ मूको. ९. चर्ये ? वि° ?; चर्ये अ°. १०. रमन्तो° वि° अ°, °न्तो° ? ?. ११. अथ मूको. १२. स्वभूता मूको. १३. या मूको. १४. आज° °यितर° मूको.

स्तोता । स्तोत्रैरेवात्मान प्रापयतीत्यर्थः[1] । अन्तर्वर्जित[2] अस्तीशुवर्जितश्च रजस प्रेरक मरुतां 'गण वि गच्छति[3] द्यावापृथिव्यौ मार्गान्[4] स्तोतृणामभिलषिताद् साधयन्[5] । द्यावापृथिव्योर्मध्येन गच्छतीत्यर्थः[6] ॥ ७ ॥

नास्य॑ व॒र्ता न त॑रु॒ता न्व॑स्ति॒ मरु॑तो॒ यमव॑थ॒ वाज॑सातौ ।
तो॒के वा॒ गोषु॒ तन॑ये॒ यम॒प्सु स व्र॒जं द॒र्ता पार्ये॒ अध॒ द्योः ॥ ८ ॥

न । अ॒स्य॒ । व॒र्ता । न । त॒रु॒ता । नु । अ॒स्ति॒ । मरु॑तः । यम् । अव॑थ । वाज॑ऽसातौ ।
तो॒के । वा॒ । गोषु॑ । तन॑ये । यम् । अ॒प्ऽसु । सः । व्र॒जम् । द॒र्ता । पार्ये॑ । अध॑ । द्योः ॥ ८ ॥

स्कन्द० न अस्य वर्ता वारयिता प्रतिबन्धकः, न अपि तरुता हिंसिता । नु इति पदपूरण । अस्ति भवति हे मरुत !, यम् अवथ पालयथ वाजसातौ सङ्ग्रामे तोके वा 'यस्य च भावेन भावलक्षणम्' (पा २,३,३७) इत्येवमिय' 'सप्तमी । सप्तमीश्रुतेश्च' लक्षणभूतयोग्यक्रियापदाध्याहार । पुत्रेषु वा प्राप्तव्येषु गोषु वा प्राप्तव्यासु तनये पौत्रेषु वा, यम् च अप्सु वृष्टिलक्षणासूदकेषु, स एव च व्रजम् गोष्ठम् दर्ता साधु दारयिता । दरण दानार्थमवबद्धस्य पृथक् करणम् । तस्य साधुकारी गोष्ठात् गवामेकदेश साधु लभत इत्यर्थः । कस्मिन् काले । उच्यते— पार्ये पूरणार्हस्यस्य च दानकर्मण एतद्रूपम् । दानकाले । अध इति पादपूरण । तस्य स्वभूतम् गोष्ठमुच्यते । द्यो दिव द्युमन्मात्र ॥ ८ ॥

वेङ्कट० न अस्य गन्ता समिरान्ता, न अपि तरिता मनुष्यस्य विद्यते हे मरुत !, यम् रक्षथ युद्धे, तोकादिनिमित्तम् यम् युद्धे अवथ' । शत्रोर्हृतस्य गोमतः सङ्ग्रामस्य पार्ये[11] अहनि गवामाहरणाय दर्ता[12] भवति[13] ॥ ८ ॥

प्र चि॒त्रम॒र्कं गृ॑ण॒ते तु॒राय॒ मारु॑ताय॒ स्वत॑वसे भरध्वम् ।
ये सहां॑सि॒ सह॑सा॒ सह॑न्ते॒ रेज॑ते अग्ने पृथि॒वी म॒खेभ्यः॑ ॥ ९ ॥

प्र । चि॒त्रम् । अ॒र्कम् । गृ॒ण॒ते । तु॒राय॑ । मारु॑ताय । स्वऽत॑वसे । भ॒र॒ध्व॒म् ।
ये । सहां॑सि । सह॑सा । सह॑न्ते । रेज॑ते । अ॒ग्ने॒ । पृ॒थि॒वी । म॒खेभ्यः॑ ॥ ९ ॥

स्कन्द० प्र इत्युपसर्गो भरध्वमित्याख्यातेन सम्बन्धयितव्य । चित्रम् विचित्र पूजनीय वा अर्चम् स्तुतिलक्षण मन्त्रम्[11] गृणते व्यत्ययेनात्र कर्मणि कर्तृशब्द । तादर्थ्ये च चतुर्थी । स्तुत्याय तुराय त्वरमाणाय[12] हिंसित्रे वा शत्रूणाम् मारुताय मरुता समूहाय स्वतवसे स्वबलाय प्र भरध्वम् प्रहरत प्रापयत । उच्चारयतेत्यर्थः । अथवा 'अर्क' (निघ २,७) इत्यन्ननाम । हविर्लक्षणमन्नम् । स्तुत्यादिगुणस्य मरुत्समूहस्यार्थाय [14]आहवनीय प्रति[15] प्रापयतेत्यर्थः । पुनरपीत्यस्य चाय प्रैष , ऋत्विजो

---

1 °न्ती° मूको. 2 असज्जित° वि° अ°, सनि° स सम, 3-3. °उपेग° वि° अ° 4. °गां वि° अ°, °गां स सम. 5. साधय वि° अ° क, साधनं सम 6 °एन्ती° मूको 7. 'स्वेच्छितेवगिय वि°. 8 8 °मीजुते° वि° । °मी पुन° वि° अ. 9. भरत मूको. 10. मु ऋ ६,२१,२।१६,१ माध्यम्, मा° मूको 11 दता मूको. 12. °बन्ति दर्वं अ°. 13 मन्त्राग वि°. 14. त्वरणाय मूको 14-15. हवनीय विप्रति मूको

दीप्तशक्तिकम् रुद्रस्य सूनुम् अपत्यभूतम् हुवसा आह्वानेन आ विवासे [1]परिचरामि । आह्वया-मीत्यर्थः[1] । किमर्थम् । उच्यते—दिवः पञ्चमीश्रुतेः आगन्तुमिति शेषः । द्युलोकादागन्तुम् अर्थाय उत्साहाय । द्युलोकादस्मदभिमुखं प्रति आगन्तुमुत्साहं करिष्यतीत्येवमर्थमित्यर्थः । कस्मात् । उच्यते— [2]यस्मात् शुचयः शुद्धा वा[2] दीप्ता वा मनीषाः स्तुतयः गिरयः न पर्वता इव अभ्राः इव च उग्राः अप्रसह्याः तीव्राः अस्पृध्रन् स्पर्धन्त इव । यस्मादहं शोभनतरा अहं शोभनतरेत्येवं परस्परं स्पर्धायुक्ता इव स्तुतय उपकल्पिता इत्यर्थः ॥ ११ ॥

वेङ्कट० तम् वर्धमानम् महान्तम् दीप्यमानायुधम् रुद्रस्य सूनुम् गणं स्तोत्रेण परिचरामि । दिवः वेगाय[3] शुचीनि स्तोत्राणि मेघा इव व्याप्ताः उद्गूर्णाः इतरेतरं स्पर्धन्ते ॥ ११ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये अष्टमो वर्गः[4] ॥

[ ६७ ]

[5]भरद्वाजो बार्हस्पत्य ऋषिः । मित्रावरुणौ देवता । त्रिष्टुप् छन्दः[5] ।

विश्वे॑षां वः स॒तां ज्येष्ठ॑तमा गी॒र्भिर्मि॒त्रावरु॑णा वावृ॒धध्यै॑ ।
सं या र॒श्मेव॑ य॒मतु॒र्यमि॑ष्ठा॒ द्वा जनाँ॒ अस॑मा बा॒हुभिः॒ स्वैः ॥ १ ॥

विश्वे॑षाम् । वः॒ । स॒ताम् । ज्येष्ठ॑ऽतमा । गी॒ःऽभिः । मि॒त्रावरु॑णा । व॒वृ॒धध्यै॑ ।
सम् । या । र॒श्माऽइ॑व । य॒मतुः॑ । यमि॑ष्ठा । द्वा । जना॑न् । अस॑मा । बा॒हुऽभिः॑ । स्वैः ॥ १ ॥

स्कन्द० "'विश्वेषां वः' मैत्रावरुणमेकम्"। मित्रावरुणदेवत्यमेतत्[6] सूक्तम् । विश्वेषाम् निर्धारणे इयं षष्ठी । सर्वेषाम् वः युष्माकम्, सताम् प्रशस्तानां देवानां मध्ये ज्येष्ठतमा अतिशयेन प्रशस्यौ गीर्भिः मित्रावरुणौ वावृधध्यै अस्माभिः वर्धयितुम्, आह्वयामीति शेषः । 'या यौ रश्मा इव[6]' रश्मयो रज्जवः ताभिरिव सम् यमतुः संयतवन्तौ । यद्धवन्तावित्यर्थः । यमिष्ठा अतिशयेन यन्तारौ द्वा द्वावपि जनान् शत्रुभूतान् मनुष्यान् असमा असदृशावन्यैर्देवैः । केन संयतवन्तौ । बाहुभिः स्वैः आत्मीयैरेव ॥ १ ॥

वेङ्कट० सर्वेषामेव विद्यमानानां[7] युष्माकम् अतिशयेन प्रशस्यौ स्तुतिभिः मित्रावरुणौ प्रवृत्तोऽहं वर्धयि-तुम् । सम्[8] यमतुः या रश्मिनेव[9] अतिशयेन[10] यन्तारौ द्वौ मिलितौ[11] जनान् असदृशौ केनचिदपि[12] बाहुभिः आत्मीयैः ॥ १ ॥

इ॒यं मद्वां॒ प्र स्तृ॑णीते मनी॒षोप॑ प्रि॒या नम॑सा ब॒र्हिरच्छ॑ ।
य॒न्तं नो॑ मित्रावरुणा॒वधृ॑ष्टं छ॒र्दिर्यद्वां॑ वरू॒थ्यं॑ सुदानू ॥ २ ॥

1-1. प "आमी" मूको. 2-2. यस्मात् ... शुभा मूको. 3. वेगाय मूको. 4-4. नास्ति मूको. 5. "णौ दे" वि" अ. 6-6. या ... "रश्मे" मूको. 7. वेद" वि". 8. सम् मूको. 9. तु. वेंप १, २१४६d. 10. दिता वि" अ"; मतिनेत्र क्रम. 11. मुदितम् मूको. 12. नौचि" वि".

इयम् । मत् । वाम् । प्र । स्तृणीते । मनीषा । उप । प्रिया । नमसा । बर्हिः । अच्छ ।
यन्तम् । नः । मित्रावरुणौ । अधृष्टम् । छर्दिः । यत् । वाम् । वरूथ्यम् । सुदानू इति सुऽदानू ॥

स्कन्द० 'मत्' इति पञ्चम्याः स्थाने पञ्चमी । इयम् मम स्वभूताऽपि वाम् युवाम् प्र स्तृणीते प्रकर्षेणाच्छादयतीव मनोज्ञा स्तुतिः प्रिया इयम् । किमर्थम् । नमसा हविर्लक्षणेनान्नेन सह बर्हिः वेद्याम् यत् स्तृतं तत् उप अच्छ अच्छशब्द आप्तुमित्यस्यार्थे (तु या ५,२८)। उपाप्तुम् । हविर्भक्षयितुं बर्हिषि च निषत्तुमित्यर्थः । किञ्च यन्तम् दत्तम् न अस्मभ्यं हे मित्रावरुणौ । अधृष्टम् अनभिभूतं केनचित् छर्दिः गृहम्, यत् वाम् युवयोः वरूथ्यम् । 'वरूथम्' (निघ ३,४) इति गृहनाम । तस्मात् स्वार्थे तद्धितः । वरूथ्यम् । युवयोरेव यत् गृहं युवाभ्याम् 'अत्र आगत्याऽऽगत्य निषत्तव्यम् भोक्तव्यं' चेत्यर्थः । हे सुदानू! शोभनौ दातारौ! ॥ २ ।

वेङ्कट० इयम् स्तुतिः मम निर्मिता वाम् आच्छादयति, उप गच्छति प्रिया हविषा सह यज्ञे । यच्छतम् अस्मभ्यम् मित्रावरुणौ! अनभिभूतम् गृहम्, यत् युवयोः वरणीयं विद्यते हे शोभनदानौ! ॥ २ ॥

आ यातं मित्रावरुणा सुशस्त्युप प्रिया नमसा हूयमाना ।
सं यावप्नःस्थो अपसेव जनाञ्छ्रुधीयतश्चिद्यतथो महित्वा ॥ ३ ॥

आ । यातम् । मित्रावरुणा । सुऽशस्ति । उप । प्रिया । नमसा । हूयमाना ।
सम् । यौ । अप्नःऽस्था । अपसाऽइव । जनान् । श्रुधिऽयतः । चित् । यतथः । महिऽत्वा ॥ ३ ॥

स्कन्द० आ यातम् आगच्छतम् हे मित्रावरुणौ सुशस्ति शोभना शस्तिः स्तुतिर्यस्मिन् कर्मणि तत् सुशस्ति आह्वानं तेन । प्रिया अनुदात्तत्वदर्शनात् 'सम्बोधनस्यामन्त्रितस्य' प्रथमाद्विवचनस्याकारः । किं तर्हि । तृतीयैकवचनस्य । प्रियेण नमसा नमस्काररूपेण उप हूयमाना आह्वायमानौ । यौ अप्नःस्था इत्यत्र व्यत्ययेनैकवचनम् । कर्मस्थौ । नित्यमेव यज्ञकर्म कुर्वन्तौ तिष्ठथ इत्यर्थः । कौ इव । उच्यते—अपसा इव अप इति कर्म तद्वन्तौ अपसौ कर्मकरौ कौचित् तावि तौ च जनान् मनुष्यान् प्रति । कीदृशान् । श्रुधीयतः । श्रुधि श्रवणं स्तुतीनाम्, तां च इच्छन्ति श्रुधीयन्ति । तान् श्रुधीयतः । युवाभ्याम् आत्मीयानां स्तुतीनां श्रवणं कामयमानानित्यर्थः । चित् शब्दः पदपूरणः । सम् यतथ । यतिरत्र गत्यर्थः (तु निघ २,१४)। 'वैश्वानरो यतते सूर्येण' (ऋ १,९८,१), 'स भानुना यतते सूर्यस्य' (ऋ ५,३७,१) इति यथा । सम्यग्गच्छथ महित्वा महत्त्वेन ॥ ३ ॥

वेङ्कट० उप आ गच्छतम् मित्रावरुणौ! शोभनं शंसनं यस्मिन् प्रियौ हविषा हूयमानौ । जनान् गच्छथः यौ सम्यञ्चौ । यथा कर्माणि कर्मणा जने यज्ञे गच्छतः । तौ युवां महत्त्वेनाऽऽत्मनः श्रवणमिच्छतः जनान् आप्नुथ इति ॥ ३ ॥

१-१ हवनि मूको. २ तवया मूको. ३. स्तुति मूको ४ निषत्तु॰ मूको ५-५. नात्य॰ पदेये मूको ६ आगच्छादिह वि॰, आ॰ गमिह अ॰ ल छम. ७ गच्छ॰ वि॰ अ॰. ८ अस्माकम् मूको ९ शोभनावित्र मूको १०-१०. स्तुतिर्य॰ तद् मूको ११-११ ॰यत॰ माहि॰ मूको. १२. ॰न्तौ वि॰ अ॰.

अश्वा न या वाजिना पूतबन्धू ऋता यद् गर्भमदितिर्भरध्यै ।
प्र या महि महान्ता जायमाना घोरा मर्ताय रिपवे नि दीधः ॥ ४ ॥

अश्वा । न । या । वाजिना । पूतबन्धू इति पूतऽबन्धू । ऋता । यत् । गर्भम् । अदिति । भरध्यै ।
प्र । या । महि । महान्ता । जायमाना । घोरा । मर्ताय । रिपवे । नि । दीधरिति दीधः ॥ ४ ॥

स्कन्द० अश्वा न अश्वाविव या यौ वाजिना वेगवन्तौ पूतबन्धू 'बन्धु (निघ २,१०) इति धननाम, ज्ञातिपर्यायो वा। शुद्धधनौ[1] शुद्धज्ञाती वा ऋता सत्यौ यत् यौ च गर्भम् गर्भभूतौ अदिति देवमाता भरध्यै धारयितुम्। इष्टवतीति शेष । या यौ च महि महद् बलम् महान्ता शरीरेण वीर्येण वा महान्तौ जायमानावेव घोरा अप्रसह्यौ क्रूरौ वा शत्रूणामुपरि मर्ताय मनुष्याय रिपवे शत्रुभूताय। शत्रुभूत[2] मनुष्य हन्तुमित्यर्थः[2]। प्र नि दीधः । व्यत्ययेनेदमेकवचनम्। प्रकर्षेण नियमन च धारितवन्तौ। यच्छब्दश्रुतेः अस्या ऋच परस्याश्च 'ता हि क्षत्रम्' इत्यनयैकवाक्यता ॥ ४ ॥

वेङ्कट० अश्वाविव यौ बलिनौ शुद्धबन्धनौ सत्यौ यौ गर्भभूतौ अदिति मनुमैच्छत्। प्रादुर्भावयत यौ महत्त्वम्। महान्तौ जायमानौ तौ घोरौ रिपवे[1] मनुष्याय अदिति नि दधारेति ॥ ४ ॥

विश्वे यद् वां मंहना मन्दमानाः क्षत्रं देवासो अदधुः सजोषाः ।
परि यद् भूथो रोदसी चिदुर्वी सन्ति स्पशो अदब्धासो अमूराः ॥ ५ ॥

विश्वे । यत् । वाम् । मंहना । मन्दमाना । क्षत्रम् । देवास । अदधु । सऽजोषा ।
परि । यत् । भूथ । रोदसी इति । चित् । उर्वी इति । सन्ति । स्पश । अदब्धास । अमूरा ॥

स्कन्द० विश्वे सर्वे यत् वाम् युवाभ्याम् मंहना महत्त्वेन मन्दमाना मोदमाना क्षत्रम् अपठितमपि बलनामैतत्। बल धन वा देवास देवा अदधु दत्तवन्त । बलवन्तौ धनवन्तौ वा कृतवन्त इत्यर्थ । सजोषा सम्प्रीयमाणा । यत् यौ च परि भूथ परिभवथ व्यक् कुरुथ । सर्वतो व्याप्नुथ इत्यर्थः । रोदसी चित् द्यावापृथिव्यौ उर्वी महत्यौ। ययोश्च लोकपालत्वात् सन्ति स्पश भाण्डिका लोकस्य कृताकृतप्रत्यवेक्षिण अदब्धास अहिंसिता कनचित् अमूरा अमूढा । प्राज्ञवन्त इत्यर्थ ॥ ५ ॥

वेङ्कट० विश्वे यत् युवां महत्त्वेन मादयन्त युवयो देवा सहिता बलम् अदधु[4]। 'यत् च[5] विस्तृते द्यावापृथिव्यौ परि भवथ । तदानीं युवयोर्भवन्ति तेजांसि अहिंसितानि अमूढानि ॥ ५ ॥

[6]इति पञ्चमाष्टके प्रथमाध्याये नवमो वर्गः[6] ॥

---

१ शुद्ध नौ मूको. २-२ मनुष्यान्हन्तुमि° मूको. ३ रौ मूको. ४ भा° वि° अ°. ५-५ यत्र मूको. ६-६ नास्ति मूको.

स्कन्द० अवो पालयितारौ इत्था अमुत्र स्वर्गे लोके वाम् युवयो स्वभूतस्य छर्दिष गृहस्य अभिष्टौ इषु इच्छायामित्यस्यैतद्रूपम् । चतुर्थ्यर्थे च सप्तमी । अभीच्छार्थे प्रार्थनार्थे । लाभार्थमित्यर्थः । किं कृतम् । उच्यते — युवो युवयो हे मित्रावरुणौ ! अस्कृधोयु कृधुरिति ह्रस्वनाम । स्वार्थिकप्रत्ययान्तम् कृधुक इति ह्रस्वनामसु पठितम् (द्र. निघ ३,२) । न कृधु अस्कृधु दीर्घम्, तदायुर्यस्य तद् अस्कृधोयु । 'दीर्घकालावस्थायि । मम पुत्रा.' पौत्राश्च कश्चिदस्तीत्यर्थः । अथवा अस्कृधोयुरिति दधातेर्वा दानार्थस्य धेट् पाने 'इत्यस्य वा एतद्रूपम्' । अकृतधानम् । अन्यैर्यजमानैरदत्तपूर्वं युवाभ्याम् वा अपीतपूर्वमित्यर्थः । किं पुनस्तत् । सोमलक्षणमन्नम् । अस्माभिस्प्रकल्पितमिति वाक्यशेषः । अनु यत् अनु कर्मप्रवचनीय प्रतिना समानार्थः । 'यत् प्रति' गाव वसतीवर्यैकधनालक्षणा' आप स्फुरान् स्फुरन्ति । यत्र प्रक्षिप्ता आपश्चलन्त्यो दश्यन्त इत्यर्थः । अथवा 'मित्रावरुणयोरपयोजनानि गाव इति गौरिहोच्यते' । स्फुरानित्यपि स्फुरतिर्गत्यर्थः । तत् प्रति युष्मदीया गावो गच्छन्तीत्यर्थः । 'ऋजिप्यम् । ऋजुभिर्वसतीवर्यैकधनाख्याभिराप्यायत' इति ऋजिप्यम् । ऋजूनाम्' वर्तमानानाम् वा ऋजिप्यम् । यत् च धृषुम् धृष्णु अभिभवितृ शत्रूणाम् रणे सङ्ग्रामे वृषणम् वर्षितृ युनजन् अभिषवादिभिः संस्कारैर्युञ्जन्त ऋत्विज । संस्कुर्वन्त इत्यर्थः ॥ ११ ॥

वेङ्कट० रक्षकयो इत्थं युवयो सुखस्याभ्येषणे हे मित्रावरुणौ ! तत्सुखम् अनल्पागमनं भवति । 'यदा हि' युवयो स्तवाः' ऋजुगामिनं स्तोतारम् अनु स्फुरन्ति । यदा वा धृष्णुम्' वृषणम् स्वयजमानं सङ्ग्रामे युञ्जन्ति ॥ ११ ॥

'इति पञ्चमाष्टके प्रथमाध्याये दशमो वर्गः' ॥

[ ६८ ]

'भरद्वाजो बार्हस्पत्य ऋषि । इन्द्रावरुणौ देवता । त्रिष्टुप् छन्दः, नवमीदशम्यौ जगत्यौ' ।

श्रुष्टी वां यज्ञ उद्यतः सजोषा मनुष्वद् वृक्तबर्हिषो यजध्यै ।
आ य इन्द्रावरुणाविषे अद्य महे सुम्नाय मह आववर्तत् ॥ १ ॥

श्रुष्टी । वाम् । यज्ञ । उत्ऽयत । सऽजोषा मनुष्वत् वृक्तऽबर्हिष । यजध्यै ।
आ । य । इन्द्रावरुणौ । इषे । अद्य । महे । सुम्नाय । महे । आऽववर्तत् ॥ १ ॥

स्कन्द० 'ऐन्द्रावरुणमुत्तरम्' । इन्द्रावरुणदेवत्यमुत्तरं सूक्तम् । श्रुष्टी सुख क्षिप्रो वा वाम् युवयो यज्ञ उद्यत कर्तुं सङ्कल्पते सजोषा जुषे सेवनार्थस्यैतद्रूपम् । सह युवाभ्या सेवनीय मनुष्वत् मनुष्यवत् यथा कश्चिन्मनुष्य केस्यचिन्मनुष्यस्य किञ्चित् सङ्कल्पयेत् तद्वत् वृक्तबर्हिषः ऋत्विङ्नामैतत् (द्र. निघ ३,१८) । ऋत्विज सप्तम्यर्थेषु'' यजध्यै यजनाय'' ।

---

११. वाल पुत्रौ मूको. २२ दायस्यैतद्' मूको ३ अपीतपू मूको ४४ य ' मूको. ५ वा'' दे' मूको ६६ 'जना मि हो' मूको ७७. ऋजि सतिप' मूको ८ 'ऋजूना वा मूको. ९-९. 'दाहि वि' भ' १० अस्मा वि' ८, भत्मादा म'; अस्मद्व लभ ११. धृष्ण वि' भ', धृष्ण ८ एभ, १' १२. नास्ति मूको. १३ जगत्यौ मूको १४. दशमानाय मूको

मध्वर्युर्युवा यक्ष्यतीत्येवमर्थमित्यर्थः । स कतमो यज्ञः । उच्यते—य अय युवाम् इन्द्रावरुणौ इषे अन्नाय अद्य महे महते । महद् दानं दापयितुमित्यर्थः । न च केवलायान्नाय । किं तर्हि । सुम्नाय सुखाय महते च आववर्तत् अस्मात् प्रत्यावर्तयति ॥ १ ॥

वेङ्कट० क्षिप्रं[1] युवयो उवस यत्र सम्नोति[2] मनोरिव यजमानस्य यागार्थम् आववर्तत् य वाम्[3] इन्द्रावरुणौ अन्नार्थम्[4] अद्य महते[5] च सुखाय महति यज्ञे, तदेवेति ॥ १ ॥

ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता हि भूतम् ।
मघोनां मंहिष्ठा तुविशुष्म ऋतेन वृत्रतुरा सर्वसेना ॥ २ ॥

ता । हि । श्रेष्ठा । देवऽताता । तुजा । शूराणाम् । शविष्ठा । ता । हि । भूतम् ।
मघोनाम् । मंहिष्ठा । तुविऽशुष्मा । ऋतेन । वृत्रऽतुरा । सर्वऽसेना ॥ २ ॥

स्कन्द० 'यावुक्तगुणौ ता तौ इन्द्रावरुणौ । हि इति' पदपूरणः । श्रेष्ठा अतिशयेन प्रशस्यौ देवताता 'सर्वदेवात्तातिल्' (पा ४,४,१४२) इत्येवमत्र स्वार्थे तातिल् प्रत्ययः । यज्ञे तुजा हिंसितारौ शत्रूणाम् । किञ्च शूराणाम् मध्ये शविष्ठा अतिशयेन बलवन्तौ ता हि हि शब्द एवार्थे । तावेव भूतम् भवथ युवाम् । मघोनाम् धनवताम् च मध्ये मंहिष्ठा 'मंहते' (निघ ३,२०) इति दानकर्मा । अतिशयेन दातारौ । 'तुविशुष्मा बहुबलौ च' ऋतेन सत्येन च वज्रेण वृत्रतुरा वृत्रस्य हिंसितारौ सर्वसेना सर्वाभिः सेनाभिरुपेतौ ॥ २ ॥

वेङ्कट० तौ हि श्रेष्ठौ यज्ञे हिंसितारौ शत्रूणाम्, तथा शूराणाम् मध्ये 'अतिशयेन बलिनौ' तौ हि अभूतम्, धनवताम् अतिशयेन दातारौ[10] बहुबलौ[11] सत्येनैव[12] वृत्रस्य हिंसितारौ समग्रसेनौ ॥ २ ॥

ता गृणीहि नमस्येभिः शूषैः सुम्नेभिरिन्द्रावरुणा चकाना ।
वज्रेणान्यः शवसा हन्ति वृत्रं सिषक्त्यन्यो वृजनेषु विप्रः ॥ ३ ॥

ता । गृणीहि । नमस्येभिः । शूषैः । सुम्नेभिः । इन्द्रावरुणा । चकाना ।
वज्रेण । अन्यः । शवसा । हन्ति । वृत्रम् । सिसक्ति । अन्यः । वृजनेषु । विप्रः ॥ ३ ॥

स्कन्द० ता तौ गृणीहि आत्मन एवायमन्तरात्मनः प्रैषः । स्तुहि हे अन्तरात्मन्[1] । न च केवलौ । किं तर्हि । नमस्येभिः परिचरणीयैः शूषैः तदीयधनात्मकैः बलैः सह सुम्नेभिः सुखैः । स्तोतॄणाम् सुखकरैरित्यर्थः । कौ तौ । उच्यते—इन्द्रावरुणौ चकाना कामयमानौ च स्तुतीः । परोऽर्धर्चो यच्छब्दमध्याहृत्यैकवाक्यतया नेयः । ययोरन्यः वज्रेण अन्यः एकः इन्द्रः शवसा

---

१. °अयो वि॰ अ॰ २. सुम्नो° वि॰ अ॰ ३. मा॰ ल॰ एम ४. आ॰ °र्थम् मूको ५. दद° मूको ६. °गुणौ हीति मूको ७. °शुष्मा न मूको ८. नास्ति वि॰ अ॰ ९. °तैनाबलि° वि॰ अ॰ एम १०. °न्तौ मूको ११. बहुलौ वि॰ १२. तस्य वेव वि॰, तस्ये नेव अ॰.

बलेन च हन्ति वृत्रम् असुरम् मेघं वा । सिषक्ति सेवते अन्यः द्वयोः वरुणः वृजनेषु 'वृजनम्' ( निघ २,९ ) इति बलनाम, तृतीयार्थे चात्र सप्तमी । स्वसेनालक्षणैर्बलैः विप्रः मेधावी[3] ॥ ३ ॥

वेङ्कट० तौ स्तुहि नमस्यैः तयोर्बलैश्चरितैः सुखैश्च[1] इन्द्रावरुणौ दीप्यमानौ । तयोः अन्यः वज्रमादाय बलेन हन्ति शत्रुम् । सेवते अन्यः दुश्चरितेषु नरं विप्रः वरुणः मेधावी ॥ ३ ॥

ग्नाश्च यन्नरश्च वावृधन्त विश्वे देवासो नरां स्वगूर्ताः ।
प्रैभ्य इन्द्रावरुणा महित्वा द्यौश्च पृथिवि भूतमुर्वी ॥ ४ ॥

ग्नाः । च । यत् । नरः । च । ववृधन्त । विश्वे । देवासः । नराम् । स्वऽगूर्ताः ।
प्र । एभ्यः । इन्द्रावरुणा । महिऽत्वा । द्यौः । च । पृथिवि । भूतम् । उर्वी इति ॥ ४ ॥

स्कन्द० ग्नाः च स्त्रियश्च यत् यौ नरः च मनुष्याश्च वावृधन्त स्तुतिभिर्वर्धयन्ति । विश्वे सर्वे च देवाः नराम् षष्ठीनिर्देशाद् उपकर्तुमिति शेषः । मनुष्याणामुपकर्तुम् स्वगूर्ताः स्वयमेवाभ्युद्यताः । स्वोत्साहेनैव मनुष्याणामुपकारिण इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । प्र इत्येतस्य सम्बन्धि भूतमिति चतुर्थपादस्थम् आख्यातम् तृतीयेऽपि पादेऽनुषक्तव्यम् । प्र भूतम् भू प्राप्तावित्यस्यान्तर्णीतण्यर्थस्येदं रूपम् । प्रकर्षेण प्रापयतम् ; धनानि दत्तमित्यर्थः । एभ्यः अस्मभ्यं हे इन्द्रावरुणौ! महित्वा स्वेन [4]माहात्म्येन । न केवलमिन्द्रावरुणौ[4] । किं तर्हि । द्यौः च । च-शब्दात् त्वमपि हे पृथिवि! प्र भूतम् उर्वी विस्तीर्णे । इन्द्रावरुणयोः प्रसादेन युवां द्यावापृथिव्यौ प्रभूतम् इत्येवम् अथेन्द्रावरुणयोः[5] प्राधान्याद् द्यावापृथिव्योश्च गुणभावाद् ऐन्द्रावरुणत्वस्याऽविरोधः ॥ ४ ॥

वेङ्कट० देवपत्न्यः देवाश्च यदा अवीवृधन्त मरुतश्च, [6]देवानां मध्ये ये[6] स्वयमेव उद्गूर्णाः । तदा एभ्यः देवेभ्यो देवपत्नीभ्यश्च प्र अभवतम् महत्त्वेन हे इन्द्रावरुणौ! । हे द्यावापृथिव्यौ! विस्तीर्णे युवां च प्राभूतम्[7] युद्धे साहाय्याय[8] ॥ ४ ॥

स इत्सुदानुः स्ववाँ ऋतावेन्द्रा यो वां वरुण दाशति त्मन् ।
इषा स द्विषस्तरेद्दास्वान्वंसद्रयिं रयिवतश्च जनान् ॥ ५ ॥

सः । इत् । सुऽदानुः । स्वऽवान् । ऋतऽवा । इन्द्रा । यः । वाम् । वरुण । दाशति । त्मन् ।
इषा । सः । द्विषः । तरेत् । दास्वान् । वंसत् । रयिम् । रयिऽवतः । च । जनान् ॥ ५ ॥

स्कन्द० इत्-शब्द एवार्थे । सः एव सुदानुः शोभनो दाता स्ववान् धनवांश्च अन्नवान् यज्ञवांश्च[9] । यः किं करोति । उच्यते — इन्द्रा । [10]"अन्यतरनाम्नेदं तदेकदेशत्वाद्[10]" उभयोरभिधानम् । इन्द्रैकदेशकौ!

१-१. के ...तः मूको. २. मेधाविश्च स्व मूको. ३. स्वो° वि' अ' ख; सो° लक. ४-४. माहा...केव° मूको. ५. °देशेव...न्द्राः° वि'; °मिश्र्व इन्द्राः' वि' अ. ६-६. °धनाश्वौ यः वि' अ'; °धनाश्चैव यः ल लक. ७. प्रादुर्भूत वि' अ'. ८. साह्याय वि'; साहाय्यौ यद अ'. ९. नास्ति वि'. १०-१०. °अन्ये...न्ना दे° मूको.

स्कन्द० अपि च नः अस्माकम् सुत्रामः 'शोभनाः त्रातारो यस्य स सुत्रामः'। शोभनरक्षण![1]। देवगोपा देवा गोपायितारो यस्य स देवगोपाः सूरिभ्यः 'सूरिः' ( निघ ३, १६ ) इति स्तोतृनाम, षष्ठ्यर्थे चात्र चतुर्थी। स्तोतृणो हे इन्द्रावरुणा! रयिः धनम् स्यात् युवयोः प्रसादेन भवेत्। येषाम् अस्माकं "युवयोरेव प्रसादेन शुष्मः"[2] बलम् पृतनासु सङ्ग्रामेषु साह्वान् अभिबभूवान्। शत्रूनभिभवत्वित्यर्थः। सद्यः एव द्युम्ना यशांसि वा अन्नानि वा धनानि प्र तिरते प्रवर्धयति[3] तत्रुरिः त्वरिता तूर्विता वा शत्रूणाम् ॥ ७ ॥

वेङ्कट० अपि च अस्मभ्यं शोभनपालनः देवा गोप्तारो[4] स यस्य स्तोतृभ्यो हे इन्द्रावरुणौ! रयिः स्यात्[5]। येषाम् अस्माकं बलं सङ्ग्रामेषु शत्रून् अभिभवत् सद्यः एव धनानि प्र वर्धयति तरणशीलम्[6] ॥ ७ ॥

नू न॑ इन्द्रावरुणा गृणा॒ना पृ॒ङ्क्तं र॒यिं सौ॑श्रव॒साय॑ देवा ।
इ॒त्था गृ॒णन्तो॑ महि॒नस्य॒ शर्धो॒ऽपो न ना॒वा दु॑रि॒ता त॑रेम ॥ ८ ॥

नु । नः॒ । इ॒न्द्रा॒व॒रु॒णा॒ । गृ॒णा॒ना । पृ॒ङ्क्तम् । र॒यिम् । सौ॒श्र॒व॒साय॑ । दे॒वा॒ ।
इ॒त्था । गृ॒णन्तः॑ । म॒हि॒नस्य॑ । शर्धः॑ । अ॒पः । न । ना॒वा । दुः॒ऽइ॒ता । त॒रे॒म॒ ॥ ८ ॥

स्कन्द० नु क्षिप्रम् नः अस्माकम् हे इन्द्रावरुणा! गृणाना स्तूयमानौ पृङ्क्तम् पृची सम्पर्के। सम्पर्चयतम्। दत्तमित्यर्थः। रयिम् धनम् सौश्रवसाय शोभनं श्रवो यस्य स सुश्रवा', तद्भावः सौश्रवसम्। छान्दसत्वाद् युवादिलक्षणः अण्। तस्मै सौश्रवसाय। सुधनत्वायास्माकमित्यर्थः। हे देवौ!। उत्तरोऽर्धर्चः परा च ऋक् वरुणस्यैव केवलस्य विभक्तस्तुतिः। इत्था सत्यम् गृणन्तः स्तुवन्तो वयम् महिनस्य महतो वरुणस्य स्वभूतम् शर्धः बलम् अप न नावा यथा कश्चिदुदकानि नावा तरेत्, तद्वद् दुरिता पापानि तरेम अतितरेम। अतिक्रामेमेत्यर्थः ॥ ८ ॥

वेङ्कट० क्षिप्रम् अस्मभ्यं हे इन्द्रावरुणौ! स्तूयमानौ सम्पर्चयतम् धनम् अस्माकं शोभनायशसाय देवौ!। इत्थम् युवयोर्महतो येषाम् स्तुवन्तः वयम् उदकानीव नावा दुरितानि अति तरेम ॥ ८ ॥

प्र स॒म्राजे॑ बृह॒ते मन्म॒ नु प्रि॒यमर्च॑ दे॒वाय॒ वरु॑णाय स॒प्रथः॑ ।
अ॒यं य उ॒र्वी म॑हि॒ना महि॑व्रतः॒ क्रत्वा॑ वि॒भात्य॒जरो॒ न शो॒चिषा॑ ॥ ९ ॥

प्र । स॒म्ऽराजे॑ । बृ॒ह॒ते । मन्म॑ । नु । प्रि॒यम् । अर्च॑ । दे॒वाय॑ । वरु॑णाय । स॒ऽप्रथः॑ ।
अ॒यम् । यः । उ॒र्वी इति॑ । म॒हि॒ना । महि॑ऽव्रतः । क्रत्वा॑ । वि॒ऽभाति॑ । अ॒जरः॑ । न । शो॒चिषा॑ ॥ ९ ॥

स्कन्द० "सम्राजे सम्यग्दीप्ताय सर्वेषाम् ईश्वराय"[7] वा बृहते मन्म मननं स्तुतिम्। नु इति पदपूरणः। प्रियम् इष्टम् प्र अर्च प्रेषय[8] हे भरद्वाजान्तरात्मन्! देवाय वरुणाय सप्रथः

---

१-१. °शोभनाद्रे ° मूको. २-२. °रेव° ··· शुष्मो वि[1] अ; °रेव शुष्मो वि[1]. ३. प्रवर्धयति मूको. ४. °प्तारौ मूको. ५. °स्यात् वि[1] अ[1]. ६. °रण° वि[1] अ[1]. ७-७. स ··· ईश्व° मूको. ८. प्रेषय मूको.

सर्वतः प्रथयितृ गुणानाम् । अथवा सः उर्वी द्यावापृथिवीनामधेयमेतत् ( द्र. निघ ३,३० )। द्यावापृथिव्यौ महिना महता महिम्नः महाकर्मा सत्या रश्मिप्रक्षेपलक्षणेन कर्मणा विभाति विविधं दीपयति अजरः न इध्यते इति यो न क्षीयते सः 'अजरः अग्निः स' इव शोचिषा दीप्त्या ॥ ९ ॥

वेङ्कट० प्र उच्चारय सर्वेषां राज्ञे महते स्तुतिम्[१] क्षिप्रं प्रियाम् देवाय वरुणाय सर्वतः पृथुतमाम्, यः अयम् अस्माकं[१] महाकर्मा विस्तीर्णे द्यावापृथिव्यौ महता यज्ञेन भासयति आदित्य इव तेजसा ॥ ९ ॥

इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।
युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥ १० ॥

इन्द्रावरुणा । सुतऽपौ । इमम् । सुतम् । सोमम् । पिबतम् । मद्यम् । धृतऽव्रता ।
युवोः । रथः । अध्वरम् । देवऽवीतये । प्रति । स्वसरम् । उप । याति । पीतये ॥ १० ॥

स्कन्द० हे इन्द्रावरुणौ! सुतपौ! सुतानाम् सोमानां पातारौ! इमम् सुतम् सोमम् पिबतम् मद्यम् मदकरम् हे धृतव्रता! धृतकर्माणौ!। स्वकर्मणामपरित्यक्तारावित्यर्थः । किञ्च युवोः युवयोः स्वभूतः रथः अध्वरम् यज्ञम् प्रति देववीतये देवभक्षणाय । युवां देवौ हवींषि भक्षयिष्यथ इत्येवमर्थमित्यर्थः । प्रति स्वसरम् 'स्वसराणि' ( निघ १,९ ) इत्यहर्नाम । प्रत्यहमित्यर्थः[४] । उप याति उपगच्छति पीतये सोमपानाय च[५] ॥ १० ॥

वेङ्कट० हे इन्द्रावरुणौ! सुतस्य[६] पातारौ![७] इमम् सुतम् सोमम् मदहेतुम् पिबतम् धृतकर्माणौ! । युवयोः रथः यज्ञम् देवकामाय अभ्युपगच्छति स्वसरम् सोमपानाय ॥ १० ॥

इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।
इदं वामन्धः परिषिक्तमस्मे आसद्यास्मिन् बर्हिषि मादयेथाम् ॥ ११ ॥

इन्द्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथाम् ।
इदम् । वाम् । अन्धः । परिऽसिक्तम् । अस्मे इति । आऽसद्य । अस्मिन् । बर्हिषि । मादयेथाम् ॥

स्कन्द० हे इन्द्रावरुणौ! मधुमत्तमस्य अतिशयेन मधुस्वादस्य वृष्णः वर्षितुः सोमस्य षष्ठीनिर्देशात् एकदेशं स्वांशलक्षणमिति शेषः । द्वितीयार्थे वा षष्ठी । 'मधुमत्तमम् अतिशयेन मधुस्वादगुणम् वृषणं वर्षितारं सोमम्'[८] । हे वृषणा! वर्षितारौ! आ "वृषेथाम् आसिञ्चतम्"[९] स्व उदरे । किं कारणम् । उच्यते—इदम् वाम् युवयोरर्थाय अन्धः सोमलक्षणम् अन्नम् परिषिक्तम्

---

१-१. अजरः ' स मूको. २. अस्तु किं वि[२] अ[१]। स्तुतिः क लभ. ३. मादिव क लभ, 'कं दोध वि[२] अ[१]. ४. प्रत्यहमीत्यर्थः मूको. ५-५. याति ··· मूको. ६. सुत[२] वि[२]. ७. पातारं वि[१] अ[१]. ८. स्वावल[२] मूको ९-९. मधुमम ··· दिवु ··· सोम मूको. १०-१०. 'आसि' मूको.

प्रह्लादिषु पात्रेषु क्षारितम् अद्भिः अस्माभिः। एवम्भूतत्वा आसद्य अस्मिन् अस्मदीये बर्हिषि मादयेथाम् तृप्यतम् ॥ ११ ॥

वेङ्कट० हे इन्द्रावरुणौ! मधुमन्तम् वृषणम्[1] सोमम् हे वर्षितारौ! [2]आ सिञ्चतम्[2]। इदम् युवाभ्याम् अन्नम् अस्माभिः परितः सिक्तम् पात्रेषु आसद्य[3] अस्मिन् बर्हिषि तृप्यतम् ॥ ११ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये द्वादशो वर्गः[4] ॥

[ ६९ ]

[5]भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्राविष्णू देवता। त्रिष्टुप् छन्दः[5]।

सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥ १ ॥

सम्। वाम्। कर्मणा। सम्। इषा। हिनोमि। इन्द्राविष्णू इति। अपसः। पारे। अस्य।
जुषेथाम्। यज्ञम्। द्रविणम्। च। धत्तम्। अरिष्टैः। नः। पथिऽभिः। पारयन्ता ॥ १ ॥

स्कन्द० 'द्यावापृथिव्यात्[6] प्रथमैन्द्रावैष्णवमुच्यते'। 'घृतवती' (ऋ ६,७०) इत्येतद् द्यावापृथिव्यम्, एतस्मात्प्रथमम् एतत् सूक्तम् इन्द्राविष्णुदेवत्यम्। समित्युपसर्गः हिनोमीत्याख्यातेन सम्बध्यते। हिनोतिश्च वृद्ध्यर्थः, हि गतौ वृद्धौ चेति। सम् हिनोमि संवर्धयामि वाम् युवाम् कर्मणा स्तुतिलक्षणेन सम् इषा अन्नेन च सोमलक्षणेन संहिनोमि हे इन्द्राविष्णू! अपसः कर्मणः यज्ञलक्षणस्य पारे अन्ते अस्य। एतत् मत्वा जुषेथाम् सेवेथाम् यज्ञम् अस्मदीयम्, द्रविणम् [7]च धनं च धत्तम्[7] दत्तम् अरिष्टैः अहिंसितैः नः अस्मान् प्रति पथिभिः मार्गैः पारयन्ता पृणातिरत्र सामर्थ्याद् गत्यर्थः, स्वार्थे च णिच्। गच्छन्तौ ॥ १ ॥

वेङ्कट० सम् गमयामि वाम् स्तोत्रेण अन्नेन च हे इन्द्राविष्णू! अस्य कर्मणः पारे। तृतीयसवने तौ युवाम् जुषेथाम् यज्ञम्, धनम् च धत्तम्[8] अहिंसितैः अस्मान् मार्गैः पारयन्तौ[8] युद्धे ॥ १ ॥

या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना।
प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ २ ॥

या। विश्वासाम्। जनितारा। मतीनाम्। इन्द्राविष्णू इति। कलशा। सोमऽधाना।
प्र। वाम्। गिरः। शस्यमानाः। अवन्तु। प्र। स्तोमासः। गीयमानासः। अर्कैः ॥ २ ॥

स्कन्द० या यौ विश्वासाम् सर्वासाम् जनितारा स्तोतृभिरभिलषितार्थसंपादनद्वारेण जनयितारौ मतीनाम् मन्यतेरर्चतिकर्मणः[9] (तु. निघ ३,१४) एतद्रूपम्। स्तुतीनाम्। इन्द्राविष्णू कलशा लुप्तोपममेतत्। कलशाविव सोमधाना सोमस्य निधानभूतौ[10]। भाजनभूतावित्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः।

1. °ष° मूको. 2-2. असि° मूको. 3. आसद्य मूको. 4-4. नास्ति मूको. 5. द्यावापृथिव्या मूको. 6-6. नास्ति वि°. 7. धत्तम् वि° अ°. 8. °यन्तौ वि° अ°. 9. °र्चति° अ°. 10. निधान° मूको.

वा, तासामभिभवितारः हे इन्द्राविष्णू ! सधमादः सह युवाभ्यां माद्यन्तीति सधमादः आ वहन्तु आनयन्तु । युवामपि जुषेथाम् सेवेथाम् विश्वा सर्वाणि हवना आह्वानानि मतीनाम् मेधाविनामस्माकम्[1] । उप ब्रह्माणि 'ब्रह्म' (निघ २,७) इत्यन्ननाम, तस्य च कर्मभूतस्य दर्शनात् उपेति चोपसर्गस्य श्रुतेर्योग्यक्रियापदाध्याहारः । उपगच्छतम् अन्नानि सोमलक्षणानि । शृणुतम् च गिरः स्तुतिलक्षणा वाचः मे मम ॥ ४ ॥

वेङ्कट० आ वहन्तु वाम् अश्वाः शत्रूणां सोढारः इन्द्राविष्णू ! सह मदन्तः[2] । जुषेथाम् विश्वानि ह्वानानि[3] स्तोतॄणाम्, उप शृणुतम् च शस्त्राणि गिरः च मदीयानि ॥ ४ ॥

इन्द्राविष्णू तत् पनयाय्यं वां सोमस्य मद उरु चक्रमाथे ।
अकृणुतमन्तरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥ ५ ॥

इन्द्राविष्णू इति । तत् । पनयाय्यम् । वाम् । सोमस्य । मदे । उरु । चक्रमाथे इति ।
अकृणुतम् । अन्तरिक्षम् । वरीयः । अप्रथतम् । जीवसे । नः । रजांसि ॥ ५ ॥

स्कन्द० हे इन्द्राविष्णू ! तत् पनयाय्यम् स्तोतव्यम् वाम् युवयोः । यत् किम् । उच्यते — सोमस्य मदे सतिसप्तमी । यच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः[4] । यत् सोमस्य मदे सति[5] । सोमेन मत्तौ सन्ताविदमर्थः । उरु बहु चक्रमाथे क्रामथः[6] । शत्रूनन्वेषमाणौ परिभ्रमथ इत्यर्थः । यच्च अकृणुतम् वृष्टिप्रदानद्वारेण कुरुथः अन्तरिक्षम् वरीयः उरुतरम् । अथवा अकृणुतमिति कृणोतेर्हिंसार्थस्य[7] रूपम् । 'धिन्विकृण्व्योर च' (पा ३, १, ८०) इत्येवम् उकारः प्रत्ययः अकारश्चान्तादेशः । हिंस्थः अन्तरिक्षम् । अन्तरिक्षस्य च हिंसा तदाश्रितस्य मेघस्य हिंसया । यच उरुतरमन्तरिक्षमाश्रितम् मेघं हिंस्थ इत्यर्थः । यच्च अप्रथतम् पृथूनि कुरुथः । दत्थ[8] इत्यर्थः । जीवसे जीवनाय नः अस्माकम् रजांसि उदकानि वृष्टिलक्षणानि ॥ ५ ॥

वेङ्कट० हे[9] इन्द्राविष्णू ! तत् स्तोतव्यम् युवयोः । सोममदार्थे[10] युवाम् उरूणि पदानि विक्रमेथे । तथेदम् अन्तरिक्षम् अकृणुतम् उरुतरम्[11] । तथा सर्वान् लोकान् अस्माकं जीवनाय अप्रथतम् ॥ ५ ॥

इन्द्राविष्णू हविषा वावृधानाग्राद्वाना नमसा रातहव्या ।
घृतासुती द्रविणं धत्तमस्मे समुद्रः स्थः कलशः सोमधानः ॥ ६ ॥

इन्द्राविष्णू इति । हविषा । ववृधाना । अग्रऽअद्वाना । नमसा । रातऽहव्या ।
घृतासुती इति घृतऽआसुती । द्रविणम् । धत्तम् । अस्मे इति । समुद्रः । स्थः । कलशः । सोमऽधानः ॥ ६ ॥

---

1. 'भाविनोऽश्वा' मूको. 2. °न्तो मूको. 3. स्तवनानि वि[1]; स्तवनानि अ[1]. 4. यच्छब्दश्रुतेर्यच्छब्दो° मूको. 5. नास्ति वि[1]. 6. धावमथ मूको. 7. कृणोर्हि° ख वि[1]; कृणोर्हि° वि[1]. 8. दत्त मूको. 9. नास्ति वि[1] अ[1]. 10. सोमे म° स कम. 11. नास्ति वि[1].

स्कन्द० हे इन्द्राविष्णू! हविषा सोमलक्षणेन पानेन वर्धमानौ हे अग्राद्वानौ! अग्राणि श्रेष्ठानि हवींषि, तेषामत्तारौ![1] । न च केवलेन हविषा । किं तर्हि । नमसा नमस्काररूपेण च स्तोत्रेण[2] । हे रातहव्या! अन्यैरपि यजमानैर्दत्तहविष्कौ! घृतासुती । आसुतिशब्दोऽत्र रसवचनः, 'त्वया मर्तासः[3] स्वदन्त[4] आसुतिम्'[4] ( ऋ २,१,१४ ) 'द्रवन्[5] नर्विरासुतः' ( ऋ २,७,६ ) इति यथा । घृतासुती । घृतस्य पातारावित्यर्थः । द्रविणम् धनम् धत्तम् दत्तम् अस्मे अस्मभ्यम् । किञ्च समुद्रः स्थः । समुद्रत्वात्स्यादिदं समुद्रशब्देनाभिधानम्, व्यत्ययेनैकवचनम्[8] । गाम्भीर्येण महत्त्वेन च समुद्रसदृशौ स्थः । कलशः कुम्भोपममेतत् । अत्रापि व्यत्ययेनैवैकवचनम्[7] । कलशाविव च सोमधानः सोमस्य निधानभूतौ ॥ ६ ॥

वेङ्कट० हे इन्द्राविष्णू! हविषा वर्धमानौ सोमस्याभिषुतस्य यज्ञमुखे अग्रादौ! नमस्कारेण सह यजमानैः दत्तहविष्कौ 'घृतमासूयते हूयते ययोः तौ'[9] द्रविणम् धनम् अस्मे[10] । समुद्रवन्ति यस्मात् सोमाः[11] सः[11] समुद्रः[11] कलशः सोमनिधानः स युवां भवथः ॥ ६ ॥

इन्द्रा॑विष्णू॒ पिब॑तं॒ मध्वो॑ अ॒स्य सोम॑स्य दस्रा ज॒ठरं॑ पृणेथाम् ।
आ वा॒मन्धां॑सि मदि॒राण्य॑ग्म॒न्नुप॒ ब्रह्मा॑णि शृणु॒तं हवं॑ मे ॥ ७ ॥

इन्द्रा॑विष्णू॒ इति॑ । पिब॑तम् । मध्वः॑ । अ॒स्य । सोम॑स्य । द॒स्रा॒ । ज॒ठर॑म् । पृ॒णे॒था॒म् ।
आ । वा॒म् । अन्धां॑सि । म॒दि॒राणि॑ । अ॒ग्म॒न् । उप॑ । ब्रह्मा॑णि । शृ॒णु॒तम् । हव॑म् । मे॒ ॥ ७ ॥

स्कन्द० [12]"हे इन्द्राविष्णू! युवाम् पिबतम् मध्वः मधुस्वादस्य अस्य सोमस्य । षष्ठीनिर्देशाद् एकदेशं स्वांशलक्षणमिति शेषः[13] । द्वितीयार्थे वा षष्ठी । मधुस्वादम् इमं सोमं हे दस्रा! दर्शनीयौ! उपक्षपयितारौ! वा शत्रूणाम् । सा च स्तोकम्[14] । किं तर्हि । [15]"जठरम् उदरम् पृणेथाम्[16]" प्रीणयतं पूरयतं वा । यावत्तृप्ति[17] पिबतमित्यर्थः । वाम् युवाम् अन्धांसि अन्नानि सोमलक्षणानि मदिराणि मदकराणि आ अग्मन् आगच्छन्ति । पुनःपुनः प्रसुतानि दीयन्त इत्यर्थः । एतत् ज्ञात्वा उप गच्छतम् ब्रह्माणि, शृणुतम् च आह्वानम् मे मम ॥ ७ ॥

वेङ्कट० इन्द्राविष्णू! पिबतम् इद मधु सोमस्य । दर्शनीयौ[1] जठरम् पूरयेथाम् । आ गच्छन्तु वाम् अन्नानि मदकराणि, उप शृणुतम् स्तोत्राणि ह्वानम् च मे ॥ ७ ॥

उ॒भा जि॑ग्यथु॒र्न परा॑ जयेथे॒ न परा॑ जिग्ये कत॒रश्च॒नैनोः॑ ।
इन्द्र॑श्च विष्णो॒ यदप॑स्पृधेथां त्रे॒धा स॒हस्रं॒ वि तदै॑रयेथाम् ॥ ८ ॥

---

1 तेषा मत्तारौ मूको. 2. स्तोत्रे मूको. 3. मर्तास मूको. 4. स च ... दि[1]; स च वि[2] अ. 5. अद्रुतौ मूको. 6. द्रविणः मूको. 7. व्यत्य ... वच[०] मूको. 8. [०]येनैव[०] मूको. 9-9. घृतमासूयते यो हूयते तौ वि[1] अ[1]. 10. अस्मे वि[1] अ[1]. 11. सोमा वि[2]. 12. नास्ति वि[1] अ[2]. 13. [०]शे वि[1] अ[2]. 14-15. इन्द्राविष्णू ... शेषः मूको. 15. स्तोत मूको. 16 16. जठर ... था मूको. 17-17. यावत्तृप्ति मूको.

उभा । जिग्युथुः । न । परा । जयेथे इति । न । परा । जिग्ये । कतरः । चन । एनोः ।
इन्द्रः । च । विष्णो इति यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वि । तत् । ऐरयेथाम् ॥८॥

स्कन्द० उभा उभौ तावत् सम्भूतौ जिग्यथुः जयथः । न परा जयेथे पराजीयेथे केनचित् । न अपि परा जिग्ये पराजीयते कतरः-चन नेदं किमो[1] रूपम् । किं तर्हि । एकतरशब्दस्य छान्दस एकारलोपः, चनशब्दोऽप्यर्थे[2] । एकतरोऽपि एनोः एनयोर्भवतोरिन्द्राविष्ण्वोः । किञ्च इन्द्रः च च-शब्दात् त्वं च हे विष्णो ! यत् यदा अपस्पृधेथाम् स्पर्धेथे शत्रुभिः सह त्रेधा त्रिशब्दोऽत्र अनेकत्वप्रतिपादनपरः । अनेकधा[3] सहस्रम् अपि शत्रूणाम् तत् तदा वि ऐरयेथाम् विविधमीरयथः । नाशयथ इत्यर्थः ॥ ८ ॥

वेङ्कट० उभौ शत्रून्[4] जिग्यथुः । न च परा जयेथे । न च अनयोः अन्यतरोऽपि परा जिग्ये । विष्णो ! त्वम् इन्द्रः च यदाऽसुरैः अपस्पृधेथाम्, तदानीम् तत् सहस्रम् गवाम् त्रेधा वि ऐरयेथाम् ॥ ८ ॥

[5]इति पञ्चमाष्टके प्रथमाध्याये त्रयोदशो वर्गः[5] ॥

[ ७० ]

[6]भरद्वाजो बार्हस्पत्य ऋषिः । सविता देवता । जगती छन्दः, अन्तिमास्तिस्रः त्रिष्टुभः[6] ।

घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ १ ॥

घृतवती इति घृतऽवती । भुवनानाम् । अभिऽश्रिया । उर्वी इति । पृथ्वी इति । मधुदुघे इति मधुऽदुघे । सुऽपेशसा । द्यावापृथिवी इति । वरुणस्य । धर्मणा । विस्कभिते इति विऽस्कभिते । अजरे इति । भूरिऽरेतसा ॥१॥

स्कन्द० द्यावापृथिव्यमेतत् सूक्तम् । घृतवती उदकवत्यौ भुवनानाम् भूतजातानाम् अभिश्रिया आश्रयणीये उर्वी[7] उरुशब्दोऽत्र बहुवचनः[8] अवयवबहुत्वात् बहुत्वव्यपदेशः[8] । बह्वयवे पृथ्वी [9]पृथुशब्दो विस्तीर्णवचनः[9] । विस्तीर्णे मधुदुघे मधु वृष्टिलक्षणमुदकम्, तस्य दोग्ध्र्यौ । द्यौः साक्षात् क्षारिणी, पृथिवी वृष्टिहेतुभूताहुतिसम्पादनद्वारेण । सुपेशसा 'पेशः' ( निघ ३,७ ) इति रूपनाम । सुरूपे द्यावापृथिवी वरुणस्य आदित्यस्य मध्यमस्य वा धर्मणा कर्मणा प्रकाशलक्षणेन वा विष्कभिते प्रतिबद्धे । स्वावस्थातः[9] अप्रच्युते इत्यर्थः । [10]अजरे जरारहिते भूरिरेतसा बहुरेतस्के[10] ॥ १ ॥

वेङ्कट० रसवत्यौ भुवनानाम् अभिश्रयणीये[11] [11]उर्वी पृथ्वी[11] उदकस्य क्षारयित्र्यौ सुरूपे[12] द्यावापृथिव्यौ वरुणस्य धारणेन विष्कभिते[13] अजरे जरारहिते बहुरेतस्के ॥ १ ॥

---

१. क्मो मूको. २. चन चनशब्दो[?] मूको. ३. अनेकधा मूको. ४. शत्रू वि[?] अ[?]. ५-५. नास्ति मूको. ६. नास्ति मूको. ७. बहुवचनविस्तीर्णवचन॰ मूको. ८. बहुव्यपदेशः मूको. ९. स्वावस्था मूको. १०. अभिश्र॰ अ[?]. ११-११. पृथिव्यौ उर्वी वि[?] अ[?], पृथ्वी चौर्वी इति क्रमः. १२. सुर उभे वि[?] अ[?]. १३. विष्कम्भे वि[?] अ[?]; वि॰ इ॰ क्रम.

वेङ्कट० यः युवाभ्यां सरळाय[1] गमनाय सुखं भवतयोर्मन्त्रं हे रोदसी । मर्त्यः[2] हवींषि प्रयच्छति, स. धृष्टे![3] अभिलषितं साधयति, प्र जायते च प्रजाभिः भवत्योः कर्मणः[1] अनन्तरम् । युवयोः नानाकृतीनि समानाशनस्थमादीनि परिपिक्कानि भूतानि ॥ ३ ॥

घृतेन द्यावापृथिवी अभीवृते घृतश्रिया घृतपृचा घृतावृधा ।
उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते इद्विप्रा ईळते सुम्नमिष्टये ॥ ४ ॥

घृतेन । द्यावापृथिवी इति । अभिवृते इत्यभिऽवृते । घृतऽश्रिया । घृतऽपृचा । घृतऽवृधा । उर्वी इति । पृथ्वी इति । होतृऽवूर्ये । पुरोहिते इति पुरःऽहिते । ते इति । इत् । विप्राः । ईळते । सुम्नम् । इष्टये ॥ ४ ॥

स्कन्द० "ते इद् विप्राः"[1] इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । ये घृतेन उदकेन द्यावापृथिव्यौ अभीवृते आच्छादिते घृतश्रिया उदकस्याश्रयभूते घृतपृचा उदकेन सम्पृक्ते । अन्तर्भिव्याप्ते इत्यर्थः । घृतावृधा उदकस्य वर्धयित्र्यौ उर्वी महत्त्वयैव पृथ्वी विस्तीर्णे होतृवूर्ये होतृवूर्यो[1] यज्ञः तस्मिन् पुरोहिते अग्रतः स्थापिते । प्रधानीकृते इत्यर्थः । ते । इत् इति पदपूरणः । विप्राः मेधाविनः यजमानाः ईळते याचन्ति सुम्नम् सुखम् इष्टये यागाय । सुखिनः सन्तः सुखं द्यावापृथिव्यौ यक्ष्यामहे इत्येवमर्थमित्यर्थः ॥ ४ ॥

वेङ्कट० उदकेन द्यावापृथिव्यौ परिवृते घृतस्याऽऽश्रयभूते घृतसम्पृक्ते घृतस्य वर्धयित्र्यौ[7] उर्वी पृथ्वी होतॄणां वरणीये यज्ञे पुरोहिते[8] । ते एव विप्राः स्तुवन्ति सुखं याचितुम् अधुना[9] ॥ ४ ॥

मधु नो द्यावापृथिवी मिमिक्षतां मधुश्चुता मधुदुघे मधुव्रते ।
दधाने यज्ञं द्रविणं च देवता महि श्रवो वाजमस्मे सुवीर्यम् ॥ ५ ॥

मधु । नः । द्यावापृथिवी इति । मिमिक्षताम् । मधुऽश्चुता । मधुदुघे इति मधुऽदुघे । मधुव्रते इति मधुऽव्रते । दधाने इति । यज्ञम् । द्रविणम् । च । देवता । महि । श्रवः । वाजम् । अस्मे इति । सुऽवीर्यम् ॥ ५ ॥

स्कन्द० मधु[10] वृष्टिलक्षणमुदकम् नः अस्मदर्थम् द्यावापृथिव्यौ[11] मिमिक्षताम् मिह सेचने सिञ्चताम् । मधुश्चुता उदकस्य क्षारयित्र्यौ मधुदुघे मधुशब्दोऽत्र मधुश्चुतेत्यनेन पौनरुक्त्यप्रसङ्गाद् न उदकनाम । किं तर्हि । स्वादुविशेषवचनः । समधुस्वादस्याहारस्य उदकस्य दोग्ध्र्यौ मधुव्रते "व्रतमदम् (तु. या २, १३) शरीरं यदावृणोति"[12] वदति । मधुस्वादं हविर्व्रतं[13] ययोस्ते मधुव्रते । दधाने ददतौ यज्ञम् द्रविणम् च धनं च देवता देवत्वेन । देवतामाहात्म्येनेत्यर्थः । अथवा देवतेति प्रथमाद्विवचनस्य स्थाने एकवचनम् । देवते देवताभूते । न च केवलं यज्ञं द्रविणं च । किं तर्हि । महि महत् श्रवः कीर्तिम् वाजम् अन्नं च अस्मे अस्मभ्यम् सुवीर्यम्[14] ॥ ५ ॥

---

1. भा[ ]रिवाय छ लम. 2. ˚र्यः वि˚. 3. हे स्पृष्टे वि˚ अ˚. 4. ˚ना मूको. 5-5. ˙˙˙इति मूको. 6. होतृवीर्यो वि˚ अ. 7. वर्धयित्र्यौ वि˚ अ˚; वर्धयित्र्यौ छ लम. 8. ˚हिते वि˚ अ˚. 9. नास्ति छ लभ. 10. ˙˙˙मधु वि˚. 11. द्यावापृथिवीमिति मूको. 12-12. न ˙˙˙ते मूको. 13. हविर्भूतं मूको. 14. सुवीर्यम्˙˙˙ वि˚ अ.

वेङ्कट० '[1]उदकम् अस्मभ्यं[1] द्यावापृथिव्यौ सिञ्चताम् उदकस्य क्षारयित्र्यौ उदकस्य दोग्ध्र्यौ उदकार्थकर्माणौ[2]। धारयन्त्यौ[3] यज्ञम् धनम् च देवतानाम् मद्व्यञ्जनीयम् धनम् अस्मभ्यं शोभनवीर्यं[4] प्रयच्छताम् ॥ ५ ॥

ऊर्जं नो द्यौश्च पृथिवी च पिन्वतां पिता माता विश्वविदा सुदंससा ।
संरराणे रोदसी विश्वशम्भुवा सनिं वाजं रयिमस्मे समिन्वताम् ॥ ६ ॥

ऊर्जम् । नः । द्यौः । च । पृथिवी । च । पिन्वताम् । पिता । माता । विश्वऽविदा । सुऽदंससा । संरराणे इति सम्ऽरराणे । रोदसी इति । विश्वऽशम्भुवा । सनिम् । वाजम् । रयिम् । अस्मे इति । सम् । इन्वताम् ॥ ६ ॥

स्कन्द० ऊर्जम् वृष्ट्युदकलक्षणं रसम् नः अस्मदर्थम् द्यौः च पृथिवी च '[5]पिन्वताम् पिवि सेचने[5]। सिञ्चतां क्षारयताम्। पिता माता क्रमेणैते द्वे द्यावापृथिव्योर्विशेषणे। पितृभूता द्यौः मातृभूता च पृथिवी। विवाहकाले 'द्यौरहं पृथिवी त्वम्' (अ १४,२,७१) इति वरे वध्वां च [6]द्युत्वपृथिवीत्वारोपेण[6] मनुष्याणां वरयितृकत्वात्[7] वधूमातृकत्वाच्च तद्धर्मेण पितृत्वेन मातृत्वेन चार्थे दिवः पृथिव्याश्च पिता मातेति च व्यपदेशः। विश्वविदा '[8]सर्वस्य ज्ञात्र्यौ सुदंससा सुकर्माणौ[8] संरराणे सम्यग्ददत्यौ रोदसी द्यावापृथिव्यौ विश्वशम्भुवा सर्वप्राणिनां सुखस्य '[9]भावयित्र्यौ सनिम् सम्भजनीयम् वाजम्' अन्नम्[9] रयिम् धनं च हिरण्यलक्षणम् अस्मे अस्मभ्यम्[10] सम् इन्वताम् 'इन्वति' (निघ २,१४) इति व्याप्तिकर्मा, सामर्थ्याच्चान्तर्णीतण्यर्थः। व्यापयतां[11] प्रापयताम्। दत्तामित्यर्थः ॥ ६ ॥

वेङ्कट० उदकम् अस्मभ्यम् द्यौः च पृथिवी च क्षरताम्। पिता द्यौः माता पृथिवी सर्वस्य लम्भयित्र्यौ सुकर्माणौ सह रममाणे रोदसी परस्परोपकार्योपकारकभावेन सर्वस्य सुखस्य भावयित्र्यौ पशून् अन्नं धनं चास्मभ्यम् [12]सम् प्रापयताम्[12] ॥ ६ ॥

[13]इति पञ्चमाष्टके प्रथमाध्याये चतुर्दशो वर्गः[13] ॥

[ ७१ ]

[14]भरद्वाजो बार्हस्पत्य ऋषिः। सविता देवता। जगती छन्दः, अन्त्यास्तिस्रस्त्रिष्टुभः[14]।

उदु ष्य देवः सविता हिरण्यया बाहू अयंस्त सवनाय सुक्रतुः ।
घृतेन पाणी अभि प्रुष्णुते मखो युवा सुदक्षो रजसो विधर्मणि ॥ १ ॥

---

१-१. नास्ति वि' अ'. २. °कार्य कर्माणि वि' अ'. ३. °रयन्ती वि' अ'. ४. °वीर्यः वि'. ५-५. °न्वता··· सेचने मूको. ६. द्युत्वपृथि··· मूको. ७. वरयितृ° मूको. ८-८. सर्वस्य···सुकर्माणौ मूको. ९-९. भावयित्र्यौ···अन्नं मूको. १०. अस्माभिः मूको. ११. नास्ति वि'. १२-१२. प्रापयताम् वि' अ'; सम्प्रापयताम् छ सम. १३-१३. नास्ति मूको.

उत् । ऊँ इति॑ । स्यः । दे॒वः । स॒वि॒ता । हि॒र॒ण्यया॑ । बा॒हू इति॑ । अ॒यं॒स्त॒ । सव॑नाय । सु॒ऽक्रतु॑ः ।
घृ॒तेन॑ । पा॒णी इति॑ । अ॒भि । प्रु॒ष्णु॒ते॒ । म॒खः । युवा॑ । सु॒ऽदक्षः॑ । रज॑सः । विऽध॑र्मणि ॥ १ ॥

स्कन्द० "'उदु ष्य देवः' सावित्रम्" । सवितृदेवत्यमेतत्सूक्तम् । उदित्युपसर्गः अयंस्त इत्याख्यातेन सम्बन्धयितव्यः । 'उ इति' पदपूरणः । स्यः सः देवः सविता हिरण्ययाः सुवर्णमयौ बाहू बाहुसम्बन्धाद् हस्तावत्र बाहुभ्यां लक्ष्येते । तथा ह्यैतिहासिकाः प्रतिमासु चित्रकर्मणि च ऊर्ध्वहस्तं सवितारं स्मरन्ति, नोर्ध्वबाहुम् । हस्तौ उत् अयंस्त उद्यच्छति । उद्गच्छन् स्वौ हस्तावुत्क्षिपतीत्यर्थः । सवनाय यज्ञाय सुक्रतुः सुकर्मा सुप्रज्ञो वा । स्य देवः इति तच्छब्द-श्रुतेर्यच्छब्दोऽध्याहार्यः[1] । यः घृतेन उदकेन पाणी स्वौ हस्तौ अभि प्रुष्णुते अभिषिञ्चति । प्रक्षालयतीत्यर्थः । हस्तप्रक्षालनेन चात्र शुचित्वं लक्ष्यते । स्वकर्म कर्तुं शुचिर्भवतीत्यर्थः । मखः यज्ञकारी युवा सर्वदैव तरुणः सुदक्षः सुष्ठूत्साही रजसः रश्मिभिराहृतस्योदकस्य लोकस्य वा विधर्मणि विधारणे ॥ १ ॥

वेङ्कट० उत् यच्छति[3] सः देवः सविता हिरण्मयौ बाहू[4] यज्ञाय सुकर्मा । तत उदकेन पाणी अभि प्रक्षालयति पूजयिता[5] अध्वर्युः[6] युवा[7] शोभनबलः लोकस्य विधारणे यज्ञे ॥ १ ॥

दे॒वस्य॑ व॒यं स॑वि॒तुः सवी॑मनि॒ श्रेष्ठे॑ स्याम॒ वसु॑नश्च दा॒वने॑ ।
यो विश्व॑स्य द्वि॒पदो॒ यश्चतु॑ष्पदो नि॒वेश॑ने प्रस॒वे चासि॒ भूम॑नः ॥ २ ॥

दे॒वस्य॑ । व॒यम् । स॒वि॒तुः । सवी॑मनि । श्रेष्ठे॑ । स्या॒म॒ । वसु॑नः । च॒ । दा॒वने॑
यः । विश्व॑स्य । द्वि॒ऽपदः॑ । यः । चतुः॑ऽपदः । नि॒ऽवेश॑ने । प्र॒ऽस॒वे । च॒ । असि॑ । भूम॑नः ॥ २ ॥

स्कन्द० देवस्य वयम् सवितुः तव सवीमनि अभ्यनुज्ञायाम् श्रेष्ठे अत्यन्तं प्रशस्ये स्याम भवेम, वसुनः च धनस्य च दावने दाने । त्वं देवः सविता सर्वकर्मसु नित्यम् अस्मान् अभ्यनुजानीयाः, धनं च दद्या इत्येतदाशास्महे इत्यर्थः । योऽहं कीदृशः । उच्यते— यः त्वम् विश्वस्य सर्वस्य द्विपदः मनुष्यादेः यः चतुष्पदः गवादेः निवेशने स्वापाय व्यवस्थापने प्रसवे च अभ्यनुज्ञायां सर्वकर्मसु असि अस्तिर्भवतिना समानार्थः । शब्दोऽपि चात्र प्रपूर्वोऽर्थे[8] द्रष्टव्यः । प्रभवसि । यः सर्वस्य प्राणिजातस्य सुषुप्तिस्वप्नजागरकर्मसु[9] च ईशिष्यत इत्यर्थः । भूमनः भूम्नः अत्यन्तं बहोः ॥ २ ॥

वेङ्कट० देवस्य वयम् सवितुः प्रसवे श्रेष्ठे[10] भवेम धनस्य च दानाय । यः विश्वस्य द्विपदः[11] यः च चतुष्पदः[12] गवादेः रात्रौ निवेशने[13] अह्नि प्रसवे भवसि स्वामी[14] बहोः ॥ २ ॥

अद॑ब्धेभिः सवितः पा॒युभि॒ष्ट्वं शि॒वेभि॑र॒द्य परि॑ पाहि नो॒ गय॑म् ।
हिर॑ण्यजिह्वः सुवि॒ताय॒ नव्य॑से॒ रक्षा॒ माकि॑र्नो अ॒घशं॑स ईशत ॥ ३ ॥

1-1. इतिति मूको. 2. °ब्दोऽध्याहारार्थः वि°. 3. °च्छन्ति वि° अ°. 4. °हु वि°. 5. नास्ति वि°. 6. °र्युः मूको. 7. युवा मूको. 8. पूर्वार्थे मूको. 9. °°°जागरकर्मसु मूको. 10. श्रेष्ठा वि°. 11. °पादो वि°. 12. °ष्पा वि°. 13. °वेशने वि° अ°. 14. स्वामी वि°.

दिवः द्युलोकस्य रोहांसि आरोहणस्थानानि अरुहत् आरोहति १पृथिव्याः सकाशात् । उद्यन्१ आदित्यः पृथिवीमिव निर्भिद्योद्गच्छन् दृश्यते. अत२ एवम् उच्यते— पृथिव्या इति आरोहंश्च अरीरमत् उपरमयति च किञ्चित् यदात्रिचरम्, पतयत् च किञ्चित् ३यद्दिवाचरम् अभ्वम् महद् भूतजातम्३ ॥ ५ ॥

वेङ्कट० उत् अयच्छद् आक्रन्दितेव बाहू४ हिरण्मयौ सविता शोभनावयवौ५ । दिवः उच्छ्रितानि स्थानान्यधिरोहति६ । पृथिव्याः पर्यन्ता दिशो रमयति । जगत्७ पातयति च तस्मिन्महत् सुखमिति ॥ ५ ॥

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥ ६ ॥

वामम् । अद्य । सवितः । वामम् । ऊँ इति । श्वः । दिवेऽदिवे । वामम् । अस्मभ्यम् । सावीः ।
वामस्य । हि । क्षयस्य । देव । भूरेः । अया । धिया । वामऽभाजः । स्याम ॥ ६ ॥

स्कन्द० वामम् प्रशस्यं ८वननीयं वा८ धनम् अद्य हे सवितः! वामम् उ उकार एवार्थे९ । वाममेव श्वः । न चाद्यैव श्व एव च केवलम्१० । किं तर्हि । चचरकालमपि दिवेदिवे अहन्यहनि वामम् धनम् अस्मभ्यम् सावीः अनुजानीयाः । दद्या इत्यर्थः । किञ्च वामस्य हि प्रशस्यस्यैव११ वननीयस्य वा क्षयस्य निवासस्थानस्य हे देव! भूरेः बहुनः अया धिया अनेन यागलक्षणेन स्तुतिलक्षणेन वा कर्मणा । साकाङ्क्षत्वात् स्यामेत्यस्यानुषङ्गः । स्वामिन इति च वाक्यशेषः । युष्मत्प्रसादेन वयं स्वामिन स्याम । अथवा१२ वामस्येत्यादौ द्वितीयार्थे षष्ठी । सावीरित्येतच्च१३ पुरस्ताद्निर्दिष्टमनुषक्तव्यम् । वामं क्षयं च दद्या इत्यर्थः । वामभाजः स्याम अन्येषां च प्रशस्यानां वननीयानां वार्थानां सम्भक्तारो१४ वयं स्याम ॥ ६ ॥

वेङ्कट० धनम् अद्य श्वः दिवेदिवे सवितः अस्मभ्यम् प्रयच्छ, वामम् एव सावीः । वामस्य हि वासयितुः१५ देव१६! बहोः वयं सम्भक्तारः स्याम । तदेवाऽऽह— अनेन कर्मणा वयम् वामभाजः स्याम ॥ ६ ॥

१७इति प्रथमाष्टके पञ्चमाध्याये पञ्चदशो वर्गः१७ ।

[ ७२ ]

१८भरद्वाजो बार्हस्पत्य ऋषिः । बृहस्पतिर्देवता । त्रिष्टुप् छन्दः१८ ।

इन्द्रासोमा महि तद् वां महित्वं युवं महानि प्रथमानि चक्रथुः ।
युवं सूर्यं विविदथुर्युवं स्व१र्विश्वा तमांस्यहतं निदश्च ॥ १ ॥

---

१-१. पृथिव्याः - उद्यन् मूको. २. अथ मूको. ३-३. °चरम्… वजानम् वि०; °सरम्… आतद् व वि१. ४. बाहु वि१ अ, बाहू लभ. ५. °वयो वि१ अ१. ६. °हति मूको. ७. °गत लभ. ८-८. वननीयं मूको. ९. एवमनेयें व वि१. १०. केवल मूको. ११. प्रशस्यस्य मूको. १२. अथ मूको. १३. °स्येद् व वि१. ?अ मूको. १४. ?…ारो मूको. १५. ?मे मूको. १६. ?वे वि१ अ१, दव ल लभ. १७-१७. नास्ति मूको.

इन्द्रासोमा । महि । तत् । वाम् । महिऽत्वम् । युवम् । महानि । प्रथमानि । चक्रथुः ।
युवम् । सूर्यम् । विविदथुः । युवम् । स्वः । विश्वा । तमांसि । अहतम् । निदः । च ॥ १ ॥

स्कन्द० 'इन्द्रासोम' इति । इन्द्रासोमदेवत्यमेतत् सूक्तम् । हे इन्द्रासोमौ[1] महि महत् वाम् युवयोः तत्[2] महित्वम् माहात्म्यम् । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । येन युवाम् महानि महान्ति वृत्रवधादिकर्माणि प्रथमानि अन्यैरकृतपूर्वाणि चक्रथुः कृतवन्तौ स्थः । किञ्च युवम् सूर्यम् आदित्यमपि विविदथुः ज्ञातीय, युवामेव स्वः उदकम् मेघस्थम् । किञ्च विश्वा सर्वाणि दुर्भिक्षनिमित्तानि सर्वमनुष्याणाम् मनोमोहलक्षणानि तमांसि अहतम् वृष्टिप्रदानेन हतवन्तौ[3] स्थ, निदः च निन्दाश्चापि कर्माकरणनिमित्ता[4] ॥ १ ॥

वेङ्कट० हे इन्द्रासोमौ[1] महत् तत् वाम् महत्त्वम् । युवां महान्ति प्रथमानि प्रख्यातानि चक्रथुः । युवाम् सूर्यम् लम्भयथ, युवाम् उदकम् । विश्वानि तमांसि अहतम् निन्दितृंश्च ॥ १ ॥

इन्द्रासोमा वासयथ उषासमुत्सूर्यं नयथो ज्योतिषा सह ।
उप द्यां स्कम्भथुः स्कम्भनेनाप्रथतं पृथिवीं मातरं वि ॥ २ ॥

इन्द्रासोमा । वासयथः । उषसम् । उत् । सूर्यम् । नयथः । ज्योतिषा । सह ।
उप । द्याम् । स्कम्भथुः । स्कम्भनेन । अप्रथतम् । पृथिवीम् । मातरम् । वि ॥ २ ॥

स्कन्द० इन्द्रासोमा । हे इन्द्रासोमौ[1] वासयथ सर्वजगत्स्थितिहेतुभूतवृष्टिप्रदानादिव्यापारेण[4] स्वस्मिन् स्थाने निवासयथ युवाम्[5] उषसम् । सूर्यम् च उत् नयथ ऊर्ध्वं गमयथ रश्मिलक्षणेन ज्योतिषा सह । द्याम् द्युलोकं च उप स्कम्भथुः । 'स्कम्भु स्कन्भु स्कम्भु स्तम्भु प्रतिबन्धे'[6] । उपस्तम्भथः[7] स्कम्भनेन 'लुप्तोपममेतत् । स्कम्भनेनेव'[8] स्कम्भादिना । अप्रथतम् । वि इति अन्त्य उपसर्ग एतेन सम्बन्धयितव्यः । विविधं च प्रथयत पृथिवीम् मातरम् मातृभूताम् सर्वप्राणिनाम् ॥ २ ॥

वेङ्कट० इन्द्रासोमौ[1] उषसम् वासयथः स्वे स्थाने, सूर्यम् च उत् नयथः ज्योतिषा[9] सह, द्युलोकं[10] च उप स्कम्भथुः[11] अन्तरिक्षेण, [12]वि अप्रथयतम्[12] च पृथिवीम् मातरम् ॥ २ ॥

इन्द्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत ।
प्रार्णांस्यैरयतं नदीनामा समुद्राणि पप्रथुः पुरूणि ॥ ३ ॥

इन्द्रासोमौ । अहिम् । अपः । परिऽस्थाम् । हथः । वृत्रम् । अनु । वाम् । द्यौः । अमन्यत ।
प्र । अर्णांसि । ऐरयतम् । नदीनाम् । आ । समुद्राणि । पप्रथुः । पुरूणि ॥ ३ ॥

---

१. नास्ति मूको. २ कृतवन्तौ स्थ वि°. ३-३ °दाश्चापिकर्मा° मूको. ४. °नादिव्यापारेण वि°. ५ युवा मूको. ६-६. स्कम्भु स्कुम्भु स्कम्भु स्कुम्भु इत्येते सौत्रा धातवः पठ्यन्ते. ७. उपस्तम्भुथ मूको. ८-८. °पममे नतेन मूको. ९ ज्योति मूको. १० द्विलो° मूको. ११. उपस्तम्भ° मूको. १२-१२ नास्ति वि° अ° ल; प्राथयतम्

स्कन्द० इन्द्रासोमौ ! अहिम् मेघम् अपः उदकस्य परिष्ठाम् सर्वतः स्थातारम् हथः हतवन्तौ युवाम्। वृत्रम् चासुरं घ्नन्तौ च वाम् युवाम् द्यौः अनु अमन्यत अनुमतवती। हत्वा च अर्णांसि उदकानि प्र ऐरयतम् प्रेरितवन्तौ स्थः नदीनाम् गङ्गादीनां सम्बन्धीनि। गङ्गाद्यासु नदीषु यानीत्यर्थः। तैश्च समुद्राणि समुद्रान् आ पप्रथुः आपूरितवन्तौ स्थः पुरूणि बहून्। चतुरोऽपीत्यर्थः। अथवा समुद्राणीति नपुंसकनिर्देशात् समुद्रशब्देनाप्रोदकमुच्यते[1]। तेनाप्तः[2] पूरितवन्ताविति ॥ ३ ॥

वेङ्कट० इन्द्रासोमौ ! उदकानि परिवृत्य तस्थिवांसम् आहन्तारम् वृत्रम् हथः[3]। तदानीम् वाम् द्यौः अनु अमन्यत। प्र ऐरयतम् च युवाम् उदकानि नदीनाम् तैश्चोदकैः समुद्रान् बहून् आपूरितवन्तौ। लिङ्गभेदश्छान्दसः। यद्वा ······ काद्यापूरयतादिति (?) ॥ ३ ॥

इन्द्रासोमा पुक्वमामास्वन्तर्नि गवामिद्दधथुर्वक्षणासु ।
जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वन्तः ॥ ४ ॥

इन्द्रासोमा । पक्वम् । आमासु । अन्तः । नि । गवाम् । इत् । दधथुः । वक्षणासु ।
जगृभथुः । अनपिऽनद्धम् । आसु । रुशत् । चित्रासु । जगतीषु । अन्तरिति ॥ ४ ॥

स्कन्द० इन्द्रासोमा। हे इन्द्रासोमौ ! पक्वम् भोगयोग्यम् क्षीरम् आमासु गवामित्येतेन सामानाधिकरण्यात् षष्ठ्यर्थ एषा सप्तमी। आमानाम् अपक्वानाम्। स्वयमभोगयोग्यानामित्यर्थः। अन्तः मध्ये गवाम्। इत् इति पदपूरणः। नि दधथुः[4] हेतुभूतवृष्टिप्रदानादिना निदधाथे[5] वक्षणासु। वक्षणाशब्देनात्र नदीतीरस्थगव्येकदेशवर्तित्वात्[6] ऊधांस्युच्यन्ते। ऊधस्सु। निधाय जगृभथुः। प्रहितवाणीतव्यर्थः। गाह्यथः। मनुष्यैर्दोहयथ इत्यर्थः। अनपिनद्धम् अबद्धभूतम्[7] आसु गोषु सप्तमीनिर्देशात् व्यवस्थितमिति शेषः। कीदृशम्। उच्यते— रुशत् 'रुशदिति वर्णनाम' (या ६,१३)। शुक्लवर्णम्। चित्रासु विचित्रासु कृष्णधूम्ररक्तादिवर्णासु जगतीषु 'जगती' (निघ २,११) इति गोनाम गोषु। कृष्णादिवर्णास्वपि गोषु शुक्लमेव, न कृष्णादिवर्णमित्यर्थः। अन्तः मध्ये। सप्तमीनिर्देशाद् उत्पन्नम्। स्थितमिति वाक्यशेषः ॥ ४ ॥

वेङ्कट० हे इन्द्रासोमौ ! गवाम्[8] आमासु[9] वक्षणासु[10] ऊधस्सु अन्तः[11] [12]नि दधथुः[13] पक्वम् पयः[13]। जगृभथुः[14] च आसु वक्षणासु अनपिनद्धम् पयः, यथा पृथिव्यां न पतति, श्वेतं[15] चित्रवर्णासु गोषु अन्तः[16] ॥ ४ ॥

इन्द्रासोमा युवमङ्ग तरुत्रमपत्यसाचं श्रुत्यं रराथे ।
युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ॥ ५ ॥

---

1. शब्देनाप्रोच्यते मूको. 2. नाप्तः मूको. 3. हतः मूको. 4. निदधुः मूको. 5. निधाये मूको. 6. सी ··· देना मूको. 7. अबद्धभूतम् मूको. 8. नयाम् मूको. 9. आमा वि[1] अ[1]; 'ह्य म सु स हम. 10. यह[1] मूको. 11. अन्तः मूको. 12-13. दिदधुः वि[1] अ[1]. 13. यथा वि[1] अ[1]; यथा अ[1]. 14. जिघः वि[1] अ[1]; ··· मीदः स हम. 15. श्वेत मूको. 16. अन्ता वि[1]; अन्ता अ[1]; अन्ताः ह; अन्ता हम.

इन्द्रासोमा । युवम् । अङ्ग । तरुत्रम् । अपत्यऽसाचम् । श्रुत्यम् । रराथे इति ।
युवम् । शुष्मम् । नर्यम् । चर्षणिऽभ्यः । सम् । विव्यथुः । पृतनाऽसहम् । उग्रा ॥ ५ ॥

स्कन्द० इन्द्रासोमा । हे इन्द्रासोमौ ! युवम् अङ्ग क्षिप्रम् तरुत्रम् तारयितारं[1] शत्रूणाम् अपत्यसाचम् अपत्यानां सेवितारम् । स्वपुत्रपौत्रादिभाजमित्यर्थः । श्रुत्यम् श्रुतं विख्यातं पुत्रम्[1] रराथे दत्थः[1] । न केवलं पुत्रम् । किं तर्हि । युवम् शुष्मम् बलमपि नर्यम् नृभ्यो हितम् चर्षणिभ्यः मनुष्येभ्यः सम् विव्यथुः । सम्प्रदानचतुर्थीश्रुतेः वेतिरत्र दानार्थः । सन्दत्थः[2] पृतनाषाहम् सङ्ग्रामेष्वभिभवितृ हे उग्रा ! अप्रसह्यौ ! क्रूरौ ! वा शत्रूणामुपरि ॥ ५ ॥

वेङ्कट० इन्द्रासोमौ ! युवाम् अङ्ग तारकं धनं पुत्रपौत्रभाजं श्रवणीयं[3] प्रयच्छथः । युवां बलं हितं मनुष्येभ्यः सम् विव्यथुः पृतनासहम् उद्गूर्णौ ![4] ॥ ५ ॥

[5]इति पञ्चमाष्टके प्रथमाध्याये षोडशो वर्गः[5] ॥

[ ७३ ]

[6]भरद्वाजो बार्हस्पत्य ऋषिः । बृहस्पतिर्देवता । त्रिष्टुप् छन्दः[6] ।

यो अद्रिभित् प्रथमजा ऋतावा बृहस्पतिराङ्गिरसो हविष्मान् ।
द्विबर्हज्मा प्राघर्मसत् पिता न आ रोदसी वृषभो रोरवीति ॥ १ ॥

यः । अद्रिऽभित् । प्रथमऽजाः । ऋतऽवा । बृहस्पतिः । आङ्गिरसः । हविष्मान् ।
द्विबर्हऽज्मा । प्राघर्मऽसत् । पिता । नः । आ । रोदसी इति । वृषभः । रोरवीति ॥ १ ॥

स्कन्द० 'बार्हस्पत्यं ततः परम्' । तत ऐन्द्रासोमात् परम् एतत् सूक्तं बृहस्पतिदेवत्यम् । यः अद्रिभित् मेघानां भेत्ता प्रथमजाः पूर्वजः ऋतावा सत्यवान् यज्ञवान् वा बृहस्पतिः आङ्गिरस अङ्गिरसः[7] पुत्रः । प्रजापतेर्हि पुत्रोऽङ्गिरास्तस्य पुत्रो बृहस्पतिः । 'एवं हि बृहद्देवताकारादयः[8] स्मरन्ति —

'निसोवत्सरिके सत्रे[9] [10]प्रजाकामः प्रजापतिः[10] ।
आहरत् [11]सहितः साध्यैर्विश्वैर्देवैः सहेति च ॥
तत्र वाग् दीक्षणीयायामाजगाम[11] शरीरिणी ।
तां दृष्ट्वा [12]युगपत् तत्र कस्याथ वरुणस्य च ॥
शुक्रं चस्कन्द तद्वायुरग्नौ[12] प्रासद् यदृच्छया ।
ततोऽर्चिभ्यो[13] भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः ॥

[1] नू… कारः मूको. [2] नास्ति मूको. [3] दर्वे: मूको. [4] सन्दर्भः मूको. [5] धयगी° वि° मा°. [6] षो वि° मा°. [7-7] नास्ति मूको. [8-8] …कारादयः मूको. [9] सत्रे मूको. [10-10] प्रजाकाम… प्र मूको. [11-11] सहि तत्साध्यैर्विश्वैर्देवैश्च … णीयाया° मूको. [12-12] युगपद् … स्कन्दवायुरग्नौ मूको. [13] °र्चिर्भ्यो मूको.

योऽङ्गिरस्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ।
'बृहस्पतेर्भरद्वाजो विदथीति' य उच्यते' ॥ (बृदे ५,९७-९९,१०३) इति ।

हविष्मान् उदकेन मधुपर्कसूक्तेन वा हविषा[1] युक्तान् द्विबर्हज्मा बर्हपरोर्वधकर्मणः[1] (द्र. निघ २,१९) बृंहेर्वा वृद्ध्यर्थस्य अजेश्च इदं रूपम् । सांयोगिकेन शारीरेण[3] च द्वाभ्यामपि बलाभ्यां यश्छत्रून् हन्ति परिवृद्धं वा 'उद् द्विबर्हम्[4] 'यज्ञम् तेन' शत्रून् मेघान् वा प्रति अजति गच्छतीति[5] द्विबर्हज्मा । प्राथर्मसत् प्रकृष्टस्य घर्मस्य कर्ता प्राघर्मो ग्रीष्मः । 'तस्येदम्' ( पा ४,३,१२० ) इत्यण् । तस्मिन् वृष्ट्या सीदतीति प्राथर्मसत् । ग्रीष्मान्ते वर्षितेत्यर्थः । पिता नः 'अस्मदो द्वयोश्च' ( पा १,२,५९ ) इत्येवम् एतद् एकस्मिन्नेव बहुवचनम् । मम भरद्वाजस्य । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः रोदसी द्यावापृथिव्यौ वृषभः वर्षिता आ रोरवीति शब्दयति । गर्जितशब्देनापूरयतीत्यर्थः ॥ १ ॥

वेङ्कट० "यः शिलोच्चयभित्" पूर्वजः महान् बृहस्पतिः आङ्गिरसः हविष्मान्, स द्विगुणगमनः ग्रीष्मान्ते प्रकृष्टे घर्मे सीदन् पालयिता अस्माकम् द्यावापृथिव्यौ वृषभः आ रोरवीति ॥ १ ॥

जनाय चिद् य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार ।
घ्नन् वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान् पृत्सु साहन् ॥ २ ॥

जनाय । चित् । यः । ईवते । ऊँ इति । लोकम् । बृहस्पतिः । देवऽहूतौ । चकार ।
घ्नन् । वृत्राणि । वि । पुरः । दर्दरीति । जयन् । शत्रून् । अमित्रान् । पृत्ऽसु । सहन् ॥ २ ॥

स्कन्द० जनाय चित् जनो मनुष्यलोकः तस्मै । चिदिति पदपूरणः । यः ईवते एतदः[6] 'इदंकिमोरीश्की' ( पा ६,३,९० ) इति ईशादेशः छान्दसत्वात् । एतावते । अत्यन्तबहव इत्यर्थः । 'उ इति' पदपूरणः । लोकम् स्थानम् बृहस्पतिः देवहूतौ देवा हूयन्ते यस्मिन्[7] स देवहूतिर्यज्ञः तस्मिन् चकार करोति । सर्वमनुष्यान् यो यज्ञे यजतीत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः घ्नन् मारयन् वृत्राणि शत्रून् पुरः नगराणि तेषाम् वि दर्दरीति विविधं दारयति जयन् आन्यान् शत्रून् अन्यान् अमित्रान् पृत्सु सङ्ग्रामेषु सहन् अभिभवन् । जयोऽभिभूय वशीकरणम् । अभिभवो न्यक्कारमात्रम् । तेनानयोर्न पौनरुक्त्यम् ॥ २ ॥

वेङ्कट० जनाय चित् यः आत्मानं प्रति गच्छते लोकम् बृहस्पतिः यज्ञे चकार[10] । शत्रून्[11] घ्नन्[12] शत्रुपुराणि वि दारयति जयन्[13] शत्रून्[14] अमित्रान् पृतनासु अभिभवन्[15] ॥ २ ॥

बृहस्पतिः समजयद् वसूनि महो व्रजान् गोमतो देव एषः ।
अपः सिषासन्त्स्व१रप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ३ ॥

---

१-१. 'नोऽपि बभीति, मूको. २. हविषा मूको. ३. निबर्ह' मूको. ४. शरीरेण मूको ५-५. तन्निर्हीन् मूको. ६-६. न्य ... तेन मूको. ७-७. नास्ति मूं वि'. ८. एतत् मूको. ९-९. यदिति मूको. १०. चकार मूको. ११. ॰नु वि' अ'. १२. ग वि' अ'. १३. जय नावविशुन् मूको. १४. नास्ति वि' अ'. १५. 'वद् वि' कम; 'भति अ'.

बृह॒स्पतिः । सम् । अ॒ज॒य॒त् । वसू॑नि । म॒हः । व्र॒जान् । गोऽम॑तः । दे॒वः । ए॒षः ।
अ॒पः । सिसा॑सन् । स्वः॑ । अप्र॑तिऽइतः । बृह॒स्पतिः॑ । हन्ति॑ । अ॒मित्र॑म् । अ॒र्कैः ॥ ३ ॥

स्कन्द० बृहस्पतिः [1]सम् अजयत् सञ्जयति वसूनि धनानि महः[1] महतश्च व्रजान् गोष्ठान् गोमतः गवां पूर्णान् देवः एषः । किञ्च अपः वृष्टिलक्षणान्युदकानि सिषासन् सम्भक्तुमिच्छन् । दर्शयितुमिच्छन्निदमर्थः । स्वः सर्वम् अप्रतीतः अप्रतिगतः केनचित्[2] बृहस्पतिः हन्ति अमित्रम् शत्रुम् अर्कैः[3] । अपठितमपि सामर्थ्याद् द्रष्टव्यं वज्रनाम । वज्रैः । अथवा अर्कैः देवैर्मरुदादिभिः सह । अथवा अर्कैर्मन्त्रैः । तृतीयानिर्देशाच्च स्तुतस्सन्निति वाक्यशेषः ॥ ३ ॥

वेङ्कट० बृहस्पतिः सम्[4] जयति धनानि महतः व्रजान् पशुमतश्च देवः एषः[4] । उदकानि सम्भक्तुमिच्छन् स्वर्लोकस्थितानि शत्रुभिरप्रतिहतः बृहस्पतिः हन्ति च अमित्रम् मन्त्रैः ॥ ३ ॥

[5]इति पञ्चमाष्टके प्रथमाध्याये सप्तदशो वर्गः[5] ॥

[ ७४ ]

[6]भरद्वाजो बार्हस्पत्य ऋषिः । सोमारुद्रौ देवता । त्रिष्टुप् छन्दः[6] ।

सोमा॑रुद्रा धा॒रये॑थामसु॒र्यं१॒॑ प्र वा॑मि॒ष्टयोऽर॑मश्नुवन्तु ।
दमे॑दमे स॒प्त रत्ना॒ दधा॑ना॒ शं नो॑ भूतं द्वि॒पदे॒ शं चतु॑ष्पदे ॥ १ ॥

सोमा॑रुद्रा । धा॒रये॑थाम् । अ॒सु॒र्य॑म् । प्र । वा॒म् । इ॒ष्टयः॑ । अर॑म् । अ॒श्नु॒व॒न्तु॒ ।
दमे॑ऽदमे । स॒प्त । रत्ना॑ । दधा॑ना । शम् । नः॒ । भू॒त॒म् । द्वि॒ऽपदे॑ । शम् । चतुः॑ऽपदे ॥ १ ॥

स्कन्द० [7]'सोमारौद्रमुपान्त्यं तु भरद्वाजस्य शंसति'[7] । उपान्त्यमन्त्यसमीप इत्यर्थः । यदेतदुपान्त्यं मण्डलस्य सूक्तं भरद्वाजस्यार्षेयम् एतत् । सोमारुद्रदैवत्यमित्येव शंसति आचष्टे । कः । सामर्थ्याद् आचार्यो मम । हे सोमारुद्रौ ! धारयेथाम् [8]निवारयेथाम् असुर्यम् असुरसम्बन्धि बलम् । तस्मिन् कृते वाम्[8] युवाम् इष्टयः यागाः अस्मदीयाः अरम् पर्याप्तम् । सुप्तमिदमर्थः । प्र अश्नुवन्तु । दमेदमे यज्ञगृहेऽन्यत्रगृहे अस्मदीये स्थाने च सन्तौ सप्त सप्तसङ्ख्याकानि । बहूनीत्यर्थः । रत्ना धनानि दधाना ददतावस्मभ्यम् शम् [9]सुखवन्तौ नः[9] अस्माकम् भूतम् भवतम् द्विपदे मनुष्यादिकाय शम् एवं चतुष्पदे गवादिकाय ॥ १ ॥

वेङ्कट० हे सोमारुद्रौ ! धारयेथाम् असुराणां हन्तृ बलम् । तथा सति वाम् पर्याप्तम्[10] प्र अश्नुवन्तु यज्ञाः । गृहे-गृहे सप्त रत्नानि प्रयच्छन्तौ शङ्करौ नः[10] भवतम्[11] द्विपदे चतुष्पदे च ॥ १ ॥

सोमा॑रुद्रा॒ वि वृ॑हतं॒ विषू॑ची॒ममी॑वा॒ या नो॒ गय॑मावि॒वेश॑ ।
आ॒रे बा॑धेथां॒ निर्ऋ॑तिं परा॒चैर॒स्मे भ॒द्रा सौ॑श्रव॒सानि॑ सन्तु ॥ २ ॥

---

१-१. समजय ... द मूको. २. के मूको. ३. रवं वि° क° ल° तपम्न ल. ४. पव वि°. ५-५. नास्ति मूको. ६-६. निपा ... तमिन् वां मूको. ७-७. तुखौ न मूको. ८-८. °दिवाय ... देव वि°. ९-९. नास्ति तु मूको. १०. नौ मूको. ११. °वत मूको.

सोमारुद्रा । वि । वृहतम् । विषूचीम् । अमीवा । या । नः । गयम् । आऽविवेश ।
आरे । बाधेथाम् । निःऽऋतिम् , पराचैः । अस्मे इति । भद्रा । सौश्रवसानि । सन्तु ॥ २ ॥

स्कन्द० सोमारुद्रा ! हे सोमारुद्रौ ! वि वृहतम् वृहू उद्यमने । उद्यमनमुत्खननम् । विविधमुत्खनतम्[1] विषूचीम् । विषुशब्दो नानेत्यस्य पर्यायः, अञ्चतिर्गत्यर्थः । नानारूपगामिनीम् । अनेकप्रकारामित्यर्थः । काम् । उच्यते— अमीवा रोगजातिः[2] या नः अस्माकम्[3] गयम् गृहम् आविवेश प्रविष्टा । रोगा अस्माकं गृहे प्रवृत्ता इत्यर्थः । ताम् । किञ्च आरे दूरे एव सर्वो बाधेथाम् अस्मत्तोऽपनयतम् निर्ऋतिम् मृत्युदेवताम् पराचैः पराङ्मुखैर्गमनैः । किञ्च अस्मे अस्माकम् भद्रा कल्याणानि सौश्रवसानि शोभनं श्रवः अन्नं कीर्तिर्धनं वा येषां ते सुश्रवसः । तेषां सम्बन्धीनि सौश्रवसानि । शोभनेन कीर्त्यादिना युक्तानो सतामित्यर्थः । सन्तु भवन्तु ॥ २ ॥

वेङ्कट० हे सोमारुद्रौ ! वि वृहतम् विष्वगञ्चनाम् ताम्[4], अमीवा या अस्माकं गृहम् आविवेश । आरे बाधेथाम् निर्ऋतिम् पराचीनम् । अस्मासु भद्राणि स्वन्ननिमित्तानि सन्तु ॥ २ ॥

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥ ३ ॥

सोमारुद्रा । युवम् । एतानि । अस्मे इति । विश्वा । तनूषु । भेषजानि । धत्तम् ।
अव । स्यतम् । मुञ्चतम् । यत् । नः । अस्ति । तनूषु । बद्धम् । कृतम् । एनः । अस्मत् । ३॥

स्कन्द० [5]सोमारुद्रा । हे सोमारुद्रौ ! युवम् युवाम् एतानि[5] अस्मे अस्माकम् विश्वा सर्वाणि तनूषु शरीरेषु भेषजानि रोगोपशमनान्यौषधानि धत्तम् स्थापयतम् । अरोगशरीरानस्मान् कुरुतम् इत्यर्थः । [6]किञ्च अव स्यतम् स्यतिरत्रावपूर्वोऽपनयने[6] । अपनयतमित्यर्थः । अपनीय च दूरे नीत्वा [7]मुञ्चतम् । किम् । उच्यते— यत् नः[7] अस्ति तनूषु बद्धम् व्यवस्थितम् कृतम्[8] एनः पापम् अस्मत् तृतीयार्थे पञ्चम्येषा अस्माभिः ॥ ३ ॥

वेङ्कट० हे सोमारुद्रौ ! युवाम् एतानि अस्माकं विश्वानि भेषजानि अङ्गेषु धत्तम् । यत् पापम् अस्माकम् अस्ति तत् बद्धम् 'अव स्यतम्' मुञ्चतम् च । तदेवाऽऽह— तनूषु बद्धम् कृतम् पापम् अस्मत्कम् अस्मत्तः[9] अवसाय मुञ्चतमिति ॥ ३ ॥

तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः ।
प्र नो मुञ्चतं वरुणस्य पाशाद् गोपायतं नः सुमनस्यमाना ॥ ४ ॥

तिग्मऽआयुधौ । तिग्महेती इति तिग्मऽहेती । सुऽशेवौ । सोमारुद्रौ । इह । सु । मृळतम् । नः ।
प्र । नः । मुञ्चतम् । वरुणस्य । पाशात् । गोपायतम् । नः । सुऽमनस्यमाना ॥ ४ ॥

---

१. [1]खननम् मूको. २. जाति [2] वि; जाती वि[3]. ३. अस्माकं [4] मूको. ४. नाशित मूको. ५-५. सोमारुद्रा…युवमेतानि मूको. ६-६. … स्यतम्…ने मूको. ७-७. मुञ्चत … यन्नो मूको. ८-८. नास्ति[8] वि; विभजाम् अ[1]. ९. अस्मत्ता छ.

स्कन्द० प्रत्यक्षकृतायाम्मन्त्रस्य तिग्मायुधावित्यादीनां [1]पदानाम् अनामन्त्रितत्वाद् यत्तच्छब्दावध्याहृत्यैकवाक्यता[1] योज्या। यौ युवाम् तिग्मायुधौ तीक्ष्णखड्गादिशस्त्रौ तिग्महेती तीक्ष्णवज्रौ च सुशेवौ सुसुखौ स्तोतॄणां च तौ हे सोमारुद्रौ! इह जन्मनि स्थाने वा सु मृळतम् सुष्ठु सुखयतम् नः अस्मान्। किञ्च प्र मुञ्चतम् नः वरुणस्य पाशात्। यथा वरुणपाशेन न गृह्यामहे[2] तथा कुरुतमित्यर्थः। गोपायतम् रक्षतम् च नः सुमनस्यमाना सम्प्रीयमाणौ ॥ ४ ॥

वेङ्कट० तिग्मधनुष्कौ तिग्महेती सुसुखौ सोमारुद्रौ! युवाम् इह अस्मान् सुष्ठु सुखयतम्। प्र मुञ्चतम् च अस्मान्[3] वरुणस्य पाशात्। रक्षतम् अस्मान्[3] सौमनस्यमिच्छन्तौ ॥ ४ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये अष्टादशो वर्गः[4] ॥

[ ७५ ]

[5]पायुर्भारद्वाज ऋषिः। (सङ्ग्रामाशिषः) आद्याया वर्म देवता, द्वितीयस्या धनुः,
तृतीयस्या ज्या, चतुर्थ्या आर्त्नी, पञ्चम्या इषुधिः, षष्ठ्याः पूर्वार्धस्य सारथिः,
षष्ठ्या उत्तरार्धस्य रश्मयः, सप्तम्या अश्वाः, अष्टम्या रथः नवम्या रथगोपाः,
दशम्या ब्राह्मण-पितृ-सोम-द्यावापृथिवी-पूषणः, एकादशीद्वादशी-
पञ्चदशीषोडशीनामिषवः, त्रयोदश्याः प्रतोदः, चतुर्दश्या हस्तघ्नः,
सप्तदश्या युद्धभूमि-कवच-ब्राह्मणस्पत्यादितयः, अष्टादश्या
वर्म-सोम-वरुणाः, एकोनविंश्या देवब्रह्माणि। त्रिष्टुप्
छन्दः, षष्ठीदशम्यौ जगत्यौ, द्वादशीत्रयोदशी-
पञ्चदशीषोडश्येकोनविंश्योऽनुष्टुभः,
सप्तदशी पङ्क्तिः[5]।

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥ १ ॥

जीमूतस्यऽइव । भवति । प्रतीकम् । यत् । वर्मी । याति । सऽमदाम् । उपऽस्थे ।
अनाविद्धया । तन्वा । जय । त्वम् । सः । त्वा । वर्मणः । महिमा । पिपर्तु ॥ १ ॥

स्कन्द० 'जीमूतीयन्तु यत्पायुर्भारद्वाज[6] ऋषिः स्मृतः[6]। जीमूतशब्दो यस्मिन् सूक्तेऽस्ति तज्जीमूतीयमेतत् सूक्तम्। 'तत् पायुर्नाम' भरद्वाजपुत्रोऽपश्यत्। अत्र चेतिहासं बृहद्देवताकार आचष्टे—

'अभ्यावर्ती[7] चायमानः प्रस्तोकश्चैव सार्ञ्जयः[8]।
आजग्मतुर्भरद्वाजं[9] क्षितौ[10] नादरिश्चैधि[11] ॥

---

१-१. पदाना मन्त्रितावाक्यच्छन्दा° मूको. २. गृह्यामहे मूको. ३. स्वाद मूको. ४-४. नास्ति मूको. ५. वस्मायुर्भर° मूको. ६-६ तन्मायु° मूको. ७. अभ्यवर्ती मूको. ८. सञ्जय मूको. ९. अभिज° मूको. १०. जिज्ञिनी मूको. ११. वाशिवैर्द्धिम् मूको.

अभिगम्योचतुस्तौ [1]तं प्रस्ताराख्याय[1] नामनी।
युधि भारशिखैर्ब्रह्मणावां विद्धि विनिर्जितौ ॥

अथ पुरोहितावावां[2] क्षत्रबन्धूनमेव हि।
क्षत्रं तदपि विज्ञेयं[3] ब्रह्म यत्पाति[4] शाश्वतम्[4] ॥[5]

[5]ऋषिस्तु तौ[5] तथेत्युक्त्वा पायुं[6] पुत्रमभाषत।
अथर्वणावेतौ[7] शत्रूणां कुरुष्वैतौ नृपाविति ॥

[8]पितरं स तथेत्युक्त्वा युद्धोपकरणं[8] तयोः।
जीमूतस्येति सूक्तेन पृथक्त्वेनान्वमन्त्रयत्[9] ( बृदे ५, १२४-१२८ ) ॥

तत्र 'जीमूतीये प्रथमा वर्मिणः[9] कृता'। जीमूतीये सूक्ते[1] प्रथमा[1] ऋक् वर्मिणः कृता स्तुतिः। बृहद्देवताकारस्त्वाह — "प्रथमा त्वस्य[9] सूक्तस्य योद्धारं स्तौति वर्मिणम्[9] ( बृदे ५,१२९ ) इति। [10]जीमूतस्य इव[10] जीमूतो। मेघः तस्येव भवति प्रतीकम् दर्शनम्। मेघसदृशो वर्मी[11] दृश्यत इत्यर्थः। कदा। यत् यदा वर्मी[11] वर्म, कवचम्, वद्धा योद्धा याति गच्छति समदाम् उपस्थे। समदिति सङ्ग्रामनाम। सप्तमीबहुवचनं हि समत्सु ( निघ २,१७ ) इति सङ्ग्रामनामसु पठितम्। तेन चात्र तत्कारिण्यः सेना लक्ष्यन्ते। ता यत्रोपगम्य तिष्ठन्ति स तासामुपस्थः, तस्मिन् समदामुपस्थे। सङ्ग्रामभूमावित्यर्थः। अनाविद्धया तन्वा जय[12] त्वम् सः। स इति तच्छब्देन पूर्वार्धोक्तस्य वर्मिणः "प्रतिनिर्देशो न[12] वक्ष्यमाणस्य वर्ममाहात्म्यस्य[13]। स त्वं वर्मी। अनाविद्धया आहीयदर्थे। दूरदपि इषुभिरविद्धया। अथवा आविद्धशब्दः समुदायप्रसिद्ध्या लोके आयत्त वचनः। अनायत्तया तन्वा सह[14] शत्रून् [14]जय। तत्[14] त्वा त्वां वर्मणः महिमा माहात्म्यं पिपर्तु। पृ पालनपूरणयोः। पालयतु ॥ १ ॥

षड्गु० पायुर्भारद्वाजः। शौनकः—

'अभ्यावर्ती[15] चायमान[16] प्रस्तोकश्चैव सार्ञ्जयः[17]।
[18]आजग्मतुर्भरद्वाजं जितौ[18] वारशिखैर्युधि[19] ॥

अभिगम्योचतुस्तौ '[20]तु प्रस्ताराऽऽह्वयाय[20] नामनी।
युधि वारशिखैर्ब्रह्मणावां[21] [22]विद्धि विनिर्जितौ[22]।

1-1. तु प्रस्ताराख्याय मूको. 2. पुरोहितो ब्राह्मणावा मूको. 3. ज्ञेयं हि मूको. 4. सर्वेषां. मूको. 5-5. ऋषिस्तौ तु मूको 6. पायुं मूको. 7-7. ...शात्रव्यौ मूको. 8. वर्मणा मूको. 9-9. प्रथमा ...स्य मूको. 10-10. नास्ति मूको. 11-11. °दृश्यत मूको. 12. वर्मैवा मूको. 13. प्रमो वि[1]; रति वि[3]. 14-14. जयतस्त्वं मूको. 15. °वर्ति वि[2] क्र; °वर्ति क[1] रुक्ष. 16. वाय° मूको. 17. सार्ञ्जयः मूको 18-18. °ग्मतुर्नरो वि[1] क[2] रुक्ष; °ग्मतुर्जितौ रुक्ष. 19. वारशै वि[1] क[1] रुक्ष; °शिखैर्युधि रुक्ष. 20-20. तं प्रस्ताराख्याय मूको. 21. ब्रह्मणावां मूको. 22-22. विविजि° मूको.

वृक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥ ३ ॥

वृक्ष्यन्तीऽइव । इत् । आ । गनीगन्ति । कर्णम् । प्रियम् । सखायम् । परिऽसस्वजाना ।
योषाऽइव । शिङ्क्ते । विऽतता । अधि । धन्वन् । ज्या । इयम् । सऽमने । पारयन्ती ॥ ३ ॥

स्कन्द० अनया ज्या स्तुता । वक्ष्यन्ती इव यथा 'किंचिद् वक्ष्यन्ती । इत् इति पदपूरणः । काचित् स्त्री कश्चित् पुरुषम् अनुगच्छेत् तद्वत् आ गनीगन्ति[1] पुनःपुनः[2] आगच्छति[3] आकृष्यमाणा कर्णम् प्रति । प्रियम् । लुप्तोपममेतत् । प्रियमिव सखायम् । यथा [4]काचित् प्रियं सखायम् परिषस्वजाना परिष्वजमाना, तद्वत् । किम् । सामर्थ्याद् इषुं श्लिष्यन्तीत्यर्थः । योषा इव शिङ्क्ते । यथा रतिकाले[4] काचिद्योषा[5] पुंसा सुखकरमव्यक्तं[6] शब्दं कुर्यात्, तद्वदव्यक्तं[7] शब्दं करोति वितता विस्तारिता अधि धन्वन् उपरि धनुषः [8]ज्या इयम्[8] समने । सङ्ग्रामनामैतत्[9] । सङ्ग्रामे पारयन्ती । पॄ पालनपूरणयोः । पालयन्ती योद्धारम् । अथवा पूर्णातिरत्र सामर्थ्याद् गत्यर्थः, 'अरिष्टैनः पथिभिः पारयन्ता' ( ऋ ६,६९,१ ) इति यथा । गमयन्ती इषून् ॥ ३ ॥

वेङ्कट० वक्ष्यन्ती इव आ गच्छति कर्णम् प्रियम् सखायम् योद्धारम् परिष्वजमाना । योषा इव शब्दं करोति वितता अधि धनुषि ज्या इयम् सङ्ग्रामे पारयन्ती[10] ॥ ३ ॥

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥ ४ ॥

ते इति । आऽचरन्ती इत्याऽचरन्ती । समनाऽइव । योषा । माताऽइव । पुत्रम् । बिभृताम् । उपऽस्थे ।
अप । शत्रून् । विध्यताम् । संविदाने इति सम्ऽविदाने । आर्त्नी इति । इमे इति । विस्फुरन्ती इति विऽस्फुरन्ती । अमित्रान् ॥ ४ ॥

स्कन्द० अनया आर्त्नी स्तुते । ते आचरन्ती चरतिर्गत्यर्थः । [11]ज्यया आकृष्यमाणे[11] योद्धारं प्रत्यागच्छन्त्यौ समना इव योषा भर्त्रा सह समानं मनो यस्याः सा समना । भर्तुश्चित्तानुवर्तिनी । एकवचनस्य चादेशः । योषेत्येकवचनान्तेन[12] समानाधिकरणात् । यास्कस्तूपमेयद्वित्वादुपमानमपि[13] योषेत्येतद् द्विवचनान्तं मन्यते ( द्र. या ९,४० ) । तदयुक्तम्, 'मातेव पुत्रम्' इत्येकवचनान्तस्याप्युपमानस्य दर्शनात् । यथा भर्तुश्चित्तानुवर्तिनी योषा भर्तारं प्रति आगच्छेत् तद्वदागच्छन्त्यौ माता इव पुत्रम् बिभृताम् उपस्थे । उपस्थोऽङ्कः । यथा माताऽङ्के पुत्रं बिभृयात् तद्वत् बिभृताम् । शत्रून् च अप विध्यताम्

---

१-१. कश्चिद्दद्व( ऽ८ वि°. )···काचि··· अनु···गनीगन्ति मूको. २. नास्ति मूको. ३. आगच्छति मूको. ४-४ का··· तिकाले मूको. ५. काचिद्दो मूको. ६. मय··· मूको. ७. °वच्छके मूको. ८-८. ज्या··· मूको. ९. °मना ··· मूको. १०. पारयन्ति मूको. ११-११. ज्याय। आक्रमाणे मूको. १२. °वचनेन वि°. १३. °वपदिशा···इत्या° मूको.

यताम् संविदाने सम्यग्जानत्यौ 'आर्त्नी धनुष्कोटी' इमे'। कथं पुनरपविध्यताम्। विष्फुरन्ती' 'स्फुरति' ( निघ २,१९ ) इति वधकर्मा। विविधं घ्नत्यौ अमित्रान् शत्रून् ॥ ४ ॥

वेङ्कट॰ 'ते आचरन्तौ' समनस्केव' स्त्री माता इव पुत्रम् बिभृताम् योद्धारम् उपस्थे। अप शत्रून् विध्यताम् संजानाने आर्त्न्यौ इमे विविधं घ्नत्यौ' शत्रून् ॥ ४ ॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ५ ॥

बह्वीनाम् । पिता । बहुः । अस्य । पुत्रः । चिश्चा । कृणोति । समना । अवऽगत्य ।
इषुऽधिः । सङ्काः । पृतनाः । च । सर्वाः । पृष्ठे । निऽनद्धः । जयति । प्रऽसूतः ॥ ५ ॥

स्कन्द॰ अनया' इषुधिः स्तुतः। बह्वीनाम् इषूणाम् पिता। यो' यस्मादुत्पद्यते स तस्य पिता। सङ्ग्रामवेलायाम् इषुधित इषवः उत्पद्यन्ते, ततः आकृष्यमाणत्वात्। अतः स तासां पितेत्युच्यते। पालयितृसामान्याद्वा। बहुः व्यत्ययेनेदमेकवचनम्। बहवः अस्य पुत्राः इषवः। पुत्रशब्दोऽत्र बह्वीनां पितेत्यनेनैव तत्पुत्राणां बहुत्वस्यार्थस्योक्तत्वात् पुत्रधर्मयुक्तत्वप्रतिपादनार्थः। पुत्रधर्मेण पालयितव्यत्वेन' युक्ता इत्यर्थः। यो हि बहूनां पिता तस्य 'ते अवश्यं' पुत्रधर्मयुक्ताः। अतोऽपुनरुक्तम्। चिश्चा कृणोति चिश्चेति निपातः हासवचनः। हासमिव करोत्युद्धाट्यमानः'। उज्ज्वलपुङ्खत्वात्। अथवा चिश्चेति शब्दानुकरणम्। एवंरूपं शब्दं करोत्युद्धाट्यमानः। समना अवगत्य 'समनम्' ( निघ २,१७ ) इति सङ्ग्रामनाम। सर्वेष्वेव उपेत्य स्थाने। सङ्ग्रामम् उपगम्य। सङ्ग्रामे स्थितसन्निध्यर्थः। कोऽसौ। 'उच्यते—इषुधिः'। इषवो यत्र धीयन्ते स इषुधिः। किञ्चाकृत्य च सङ्काः पृतनाः च सर्वाः। सङ्काः पृतनाः इति द्वे अपि सङ्ग्रामनामनी ( तु. निघ २,१७ )। एकं स्पर्धामात्रेण यत्रेषवः क्षिप्यन्ते तद्विषयम्। परस्परवधविषयम् अन्यत्। अतो न पुनरुक्ते। सङ्ग्रामेण वाऽत्र तत्कारिणो लक्ष्यन्ते। ये च स्पर्धामात्रेण सङ्ग्रामाः, ये च परस्परवधेन, तत्कारिणः योद्धारः'। 'पृष्ठे निनद्धः नितान्तं बद्धः प्रसूतः प्रेरितः'। जयति तदिषुधिरेव जयतीत्युच्यते ॥ ५ ॥

वेङ्कट॰ बह्वीनाम् इषूणाम् पिता। तदेवाऽऽह—बहुः अस्य पुत्र' इति। इषूनभिप्रेत्याऽऽह। चिश्चा इति निपातो हासवचनः। हासमिव करोति आत्येन उज्ज्वलपुङ्खेन सङ्ग्रामान् उपेत्य। इषुधिः सङ्काः सचमानाः प्रजाः पृतनाः सङ्ग्रामसञ्चारिणीः' च सर्वाः प्रजाः जयति' पृष्ठे निनद्धः' प्रसूतेषुरिति ॥ ५ ॥

'इति पञ्चमाष्टके प्रथमाध्याये एकोनविंशो वर्गः' ॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥ ६ ॥

---

१-१. यथु… मूको. २-२. नास्ति वि' अ', ३. समनस्केव वि' अ'. ४. नास्ति वि' अ', शत्रून् इ इत्य. ५. अस्तीर्य ( या ९,१४ ) व्याख्याता. ६. नास्ति मूको ७. 'त्म्यानो मूको. ८-८. तेनायं मूको. ९. 'गुम्फमानः स्क [ या ]. १०-१०. उच्यते के ते इषुधिः मूको. ११. योधा मूको. १२-१२. नास्ति मूको; निरुक्तव्याख्यायाद् स्कन्दभाष्यादुद्धृतस्य परिवः पाठः, १३. चारिणीः मूको. १४

रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्रऽयत्र । कामयते । सुऽसारथिः ।
अभीशूनाम् । महिमानम् । पनायत । मनः । पश्चात् । अनु । यच्छन्ति । रश्मयः ॥ ६ ॥

स्कन्द० 'अभीशूनामुत वाऽपि सारथिम्' । अभीशूनां सारथेश्च इयम् ऋक्स्तुतिः । तत्रोत्तरार्धर्चेन 'अभीशून् पूर्वार्धर्चेन च सारथिं स्तौति' । रथे तिष्ठन् । तिष्ठतिरत्र सत्तायां नोर्ध्वतायाम्, सङ्ग्रामे तिष्ठतीति यथा । रथे एव सन् नयति वाजिनः अश्वान् पुरः अग्रतः, यत्रयत्र कामयते सुसारथिः । अभीशूनाम् महिमानम् पनायत । पनतेः स्तुतिकर्मणः । पनायत स्तुत हे स्तोतारः ! । यत्र मनः अश्वानाम् पश्चात् सन्तः अनु यच्छन्ति अनुबध्नन्ति सारथिमनसम् ( ? 'नसा ) । सारथीच्छावशेन गमनचित्तमश्वानां कुर्वन्तीत्यर्थः । रश्मयः अश्वानाम् ॥ ६ ।

वेङ्कट० शौनकः—'अर्धेन[1] सारथिः पश्चा[2] रश्मयोऽर्धेन संस्तुताः' ( बृदे ५,१३० ) इति । रथे तिष्ठन् नयति वाजिनः पुरस्ताद्, यत्रयत्र[3] कामयते कल्याणः सारथिः । अभीशूनाम् महिमानम् पूजयत[4] । अश्वानां 'गच्छताम् मनः[5] पश्चात् अनु यच्छन्ति रश्मयः ॥ ६ ॥

तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूँरनपव्ययन्तः ॥ ७ ॥

तीव्रान् । घोषान् । कृण्वते । वृषऽपाणयः । अश्वाः । रथेभिः । सह । वाजयन्तः ।
अवऽक्रामन्तः । प्रऽपदैः । अमित्रान् । क्षिणन्ति । शत्रून् । अनपऽव्ययन्तः ॥ ७ ॥

वेङ्कट० 'अश्वानृक्[6] सप्तमी स्तौति आयुधागारमष्टमी' ( बृदे ५,१३१ ) । तीव्रान् शब्दान् कुर्वन्ति वर्षितृपाणयः पांसुमुत्क्षिपन्तः पाणिभिः अश्वाः रथैः सह वेगं कुर्वन्तः । अवक्रामन्तः पादाग्रैः अमित्रान् हिंसन्ति शत्रून् अनपगच्छन्तः[7] ॥ ७ ॥

रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म ।
तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमानाः ॥ ८ ॥

रथऽवाहनम् । हविः । अस्य । नाम । यत्र । आयुधम् । निऽहितम् । अस्य । वर्म ।
तत्र । रथम् । उप । शग्मम् । सदेम । विश्वाहा । वयम् । सुऽमनस्यमानाः ॥ ८ ॥

वेङ्कट० अभिलषितासाऽऽयुधागारस्य शत्रुभ्यो रथेनोह्यमानं धनम् हविः[10] नाम भवति अस्य इति राज्ञः परमार्गप्रकृपाय(?) स रथवाहनेनायुधागारं तर्पयति । यत्र आयुधागारे अस्य राज्ञः आयुधम्[11]

1. ऋगियं वा ( ९,१९ ) व्याख्याता. २-२. 'र्धेन॰'' मूको. ३. युद्धेन मूको. ४. 'ध्यो मूको.' ५. 'तत्र वि'. ६. 'यात्र वि'. ७-७. 'गच्छतः मूको. ८. अश्वांस्तु बृदे. ९. मयग॰ वि'; मश्वान्' वर्' ह इम. १०. भूविः मूको. ११. आयु॰ मूको.

